# उद्भट-सागरः

( प्रथम द्वितीय तृतीय प्रवाह समन्वित. )

( तृतीयावृत्ति )

कविभूषण श्रीपूर्णचन्द्र दे काव्यरत्न उद्भटसागर बि ए

सङ्कलित

मूल्यम्—वर्द्धस्य ३, टाका, वस्त्रबद्धस्य २॥० टाका।

# उद्भट-सागरः

( प्रथम द्वितीय-तृतीय-प्रवाह-समन्वितः )

कलिकाता भवानीपुर 'आशुतोष कलेज' ध्यापक

कलिकाता-विश्वविद्यालय-वि ए परीक्षा-परीक्षक

कविभूषण श्रीपूर्णचन्द्र दे काव्यरत्न उद्भटसागर वि. ए.

सङ्कलित.

( तृतीयावृत्तिः )

कलिकाता-कर्णवोयालिस् ष्ट्रीटस्थ

२०३।१।१-सङ्ख्यकभवनात्

श्रीयुक्त हरिदास चट्टोपाध्याय

( गुरुदास चट्टोपाध्याय एण्ड सन्स् )

द्वारा

प्रकाशित ।

१८४३ शकाब्दा ।

( ३ )

नो मालिन्यं कदाचिद् भजति हि दिवसे ग्रस्यते केनचिद् वा
नो मेघैश्छाद्यते वा नयनसुखहरैर्दूष्यते वा कलङ्कैः ।
नो दर्शे चीयते वा क्वचिदपि समये पीड्यते पीडया वा
धन्यो देवाशुतोष प्रभवति भुवि ते निर्मलः कीर्त्तिचन्द्रः ॥

( ४ )

अन्तःश्वेतां बहिःश्यामामाशुतोषसरस्वतीम् ।
दण्डिनाऽजानता प्रोक्ता 'सर्व्वशुक्ला सरस्वती' ॥

( ५ )

इन्द्रस्येव शचिः स्मरस्य च रतिः कात्यायनी शूलिनः
स्वाहाऽग्नेरिव केशवस्य कमला च्छायेव सूर्य्यस्य च ।
शीतांशोरिव रोहिणी च मतिमन् देवाशुतोष प्रभो
विद्या ते महती सदा फलवती त्वय्येव रंरम्यते ॥

( ६ )

रत्नानामिव रत्नसानुशिखरी खं तारकाणामिव
स्वर्गः कल्पमहीरुहामिव सरः पङ्केरुहाणामिव ।
पाथोधिः पयसामिव प्रभवति श्लाघ्यैः सुधीसङ्गतैः
सौजन्यादिगुणैर्भवान् मतिमतामेकाश्रयो भूतले ॥

( ७ )

दोषे कर्कशता गुणे प्रणयिता पापे परं भीरुता
सत्ये निर्भयता बुधे विनयिता वित्ते परित्यागिता ।
साधौ सादरता खले विमुखता शास्त्रेषु सर्म्मज्ञता
शक्तौ संयमता स्थिता च सततं देवाशुतोष त्वयि ॥

( ८ )

भूदेवेशाशुतोषास्यराकातारकनायकः ।
विद्वन्नेत्रचकोराणां सदास्ति सुखदायकः ॥

( ९ )

दारिद्र्यं दुर्बलं दुःस्थं पुनस्तस्यैव पीडनम् ।
आशुतोष स ते दोषः क्लीवे योज्यं न पौरुषम् ॥

( १० )

मित्राणां प्रियवर्द्धनो भव सदा नैदाघनीरं यथा
शत्रूणां भयवर्द्धनो भव भृशं नैदाघरौद्रं यथा ।
आयुस्ते परिवर्द्धतां प्रतिदिनं नैदाघघस्रो यथा
प्रत्यूहः क्षयमेतु नित्यमपि ते नैदाघरात्रिर्यथा ॥

( ११ )

अव्यायामाः सुरभिसमये कामसक्ता निदाघे
रक्ता वर्षास्वभिनवजले पङ्किले पल्वलानाम् ।
कट्वल्लोपे शरदि निरताः स्वापशीला हिमर्त्तौ
शीते रात्रिभ्रमणनियतास्तेऽरयः सन्तु सर्व्वे ॥

( १२ )

तृष्णार्त्तोऽलिः कुसुमजरसं चातको वारिवाहं
तारानाथं स्मरति च यथा शुष्ककण्ठश्चकोरः ।
श्रान्तः पान्थस्तरुवरमयो दुःस्थसाहित्यसेवी
श्रीमन्तं त्वां स्मरति सततं पूर्णचन्द्रस्तथैव ॥

( १३ )

चन्द्रार्द्धशोभितललाटतटाशुतोष
किं ते वदामि सुगुणान् गुणसागरस्य ।

त्वन्नामकीर्त्तिपरिकीर्त्तनयत्न एष
पादाब्जरेणुमभिवाञ्छति पूर्णचन्द्रः ॥

( १४ )

दृष्टं शिवास्यगुणितं निधिना समेतं
कृष्णावतारनिहतं वियदिन्द्रियेण ।
यच्छेषितं शरकरेण हृतं तदर्द्धं
वङ्गेषु शिष्यवदनेषु तवाऽस्तु नाम ॥

( १५ )

अस्मिन्नुड्डटसागरे नहि जड़े कश्चिद् गुणो विद्यते
येन भ्रान्ततटान्तविश्रमवतां तृष्णानिवृत्तिर्भवेत् ।
तस्मात् स्वादुतमं पवित्रममलं पीयूषपूरोपमं
गङ्गासङ्गिसरस्वतीरसमहं संप्रार्थये साम्प्रतम् ॥

( १६ )

अस्त्यस्मिन्नवतारणा रसनिधौ नानारसानां जनाः
क्षारत्वान्न पिबन्ति सागररसं देवाशुतोष प्रभो ।
क्षारश्चेत् तव वामनेत्रपतनं प्राप्नोति दैवात् तदा
स्वाकारं परिहाय देवकृपया चोरं भवेत् तत् पुनः ॥

( १७ )

यस्य श्रीः सदने गिरा च वदने चित्ते च चिन्तामणि-
र्यः स्थैर्य्ये तुहिनालयो निरुपमो धैर्य्ये च सर्व्वंसहा ।
यो वङ्गेषु मतः सदा सुरगुरुर्विद्यार्थिनां गाहतां
सं तुच्छोड्डटसागरोऽयमतलस्पर्शं हि विद्यार्णवम् ॥

तदीयश्रीचरणाश्रितेन

श्रीपूर्णचन्द्रेण

# मङ्गलाचरणम् ।

( १ )

यो निर्म्माति बिभर्त्ति संहरति च ब्रह्मादिमूर्त्त्या जगद्
वह्निव्योमवसुन्धराम्बुपवना यस्याऽपरा मूर्त्तयः ।
यो बाह्यान्तरसर्व्वदिक्षु विहरन्नेकोऽखिलं वीक्षते
यः सर्व्वाश्रयभूरचिन्त्यमहिमा देवाय तस्मै नमः ॥

( २ )

पृथ्वीपालकिपापपर्व्वतपवी पापाब्धिपारप्लवौ
पापप्रान्तरपांशुपङ्कपथिकप्राणप्रदौ पादपौ ।
पापप्राज्यपयोदपालिपवनौ पापेभपञ्चाननौ
पादौ पाशुपतौ प्रपश्य परमौ प्राक् पूर्णचन्द्र प्रगे ॥

( ३ )

जय जय हे शिव दर्पकदाहक दैत्यविघातक भूतपते
दशमुखनाशकशायकदायक कालभयानक भक्तनते ।
त्रिभुवनकारकधारकमारक संसृतितारक धीरमते
हरिगुणगायक ताण्डवनायक मोक्षविधायक योगरते ॥

( ४ )

दीर्घाक्षी दीप्रदन्ता दनुजदलदला देवतादुःखदात्री
दिव्यास्त्रैर्दिव्यकान्तिर्दरदवदमना दीप्तदेहा दुकूलैः ।
दृप्तानां दर्पदात्री दशदिशि दशकं दृप्तदोषां दधाना
देवी दुर्गा दुरन्तं दलयतु दुरितं दुर्गतिद्रावदक्षा ॥

( ५ )

यस्याः शिल्पमनल्पकं त्रिभुवनं काव्यञ्च वेदत्रयं
यन्नाथस्त्रिपुरान्तकस्त्रिपथगा यस्याः सपत्नी मता ।
या कालत्रयमीक्षितुं सुविपुलं धत्ते च नेत्रत्रयं
सा त्रैगुण्ययुता करोतु कमलं देवी त्रिशूलायुधा ॥

( ६ )

सजलजलदकालं प्रेमवापीमरालम्
अभिनववनमालं क्षेमवल्लीप्रवालम् ।
भुवननलिननालं दानवानां करालं
निखिलमनुजपालं नौमि तं नन्दबालम् ॥

( ७ )

पुलिनवनविहारिन् वल्लवीचित्तहारिन्
दनुजदलनकारिन् योगिहृत्पद्मचारिन् ।
भवजलनिधितारिन् पीतकौशेयधारिन्
प्रमनदरविदारिन् पाहि मां विश्वभारिन् ॥

( ८ )

पण्डितान्नमरण्येऽपि मूर्खान्नं नास्ति कुत्रचित् ।
इति मूर्खे परा प्रीतिर्यस्यास्तां श्रियमाश्रये ॥

( ९ )

हरिप्रियां भजे भक्तो दीनश्च न हलिप्रियाम् ।
न भुक्त्वापि नरः पूर्व्वां भक्तो भुङ्क्तेव चापराम् ॥

( १० )

यो लंकेशगुरुः कुमारजनको योऽसौ गवीशध्वजो
यो गंगां धरति स्वयं हिमकरोद्दीप्ताङ्गकान्तिः सदा ।
यो नित्यं खलु भूविशेषसदनो वामाङ्गसङ्गस्तया
भक्तयोमाधवमादिहीनमनिशं तं श्रेयसे संश्रये ॥

भगवच्चरणाश्रितस्य
श्रीपूर्णचन्द्रस्य

# अवतरणिका ।

## प्रथमावृत्तिः ।

इह खलु भारतभूमौ प्राचीनकालादारभ्य संस्कृतभाषारविन्दमधुमत्तमधुपा बहव पण्डिता प्रादुरासन् । तेषु कालिदास भारवि भवभूति माघ श्रीहर्ष बाणभट्ट प्रभृतीनां प्रथितप्रचुरयशसां कवीनां मानससरोवरसमुद्भूतानि विविधरसभावमधमकरन्दपरागपूर्णानि कविताकनककमलानि सुविकाशमासाद्य पृथिव्या सर्व्वेषां सचेतसां यथा चित्तमाकर्षन्ति *तथा निखिलसंसारनिगूढतत्त्वविदस्ते तदन्ये च कविकुलतिलका प्रसङ्गपरवशतया तत्* कालोचितवस्तुव्यवर्णनमुखेन यानि पद्यानि रचयामासुस्तान्युद्भटकवितेति नाम्ना सहृदय हृदयाधिष्ठानपरम्परया महार्घरत्नवदद्यापि लोके सादरं विराजन्ते । इयञ्च कविता भारतस्य क्वचित्प्रदेशे सुवचनमिति क्वचित्प्रदेशे सुभाषितमिति क्वचिच्च सूक्तमित्या ख्यायते । का खलु तावदुद्भटकविता ? कया रीत्या वा तस्या अन्वर्थता नामधेयस्येति निरूपयितुमीहमानैरस्माभिरिह मतद्वैधं दृश्यते । तत्र केचिदाहु ग्रन्थविशेषसन्निवेशरहिता सामयिकनिमित्तवशान्महाजनरचिता चित्तचमत्कारिणी संस्कृतकवितैवोद्भटकवितेति "उद्भट"शब्दस्य महाशयार्थवाचकत्वात् प्रकृष्टार्थवाचकत्वाच्च । तदुक्तमभिधानचिन्तामणौ

"महेच्छे तूद्भटोदारोदात्तोदीर्णमहाशया ।
महामना महात्मा च ॥"

उत्पलमालायाञ्च—

"उद्भट कच्छपे सूर्ये प्रकृष्टे तु विनिद्भक ।"

अन्ये त्वेवं ब्रुवन्ति यत् काश्मीरदेशे उद्भटनामा कश्चित् कविराविरासीत् । स च उद्भटभट्ट, भट्टोद्भट, उद्भटाचार्य्येति तिसृभिराख्याभिरभिहितो बभूव । कह्लणकवि विरचितराजतरङ्गिणीनामकाश्मीरदेशनृपतिगणपुरावृत्तपाठादेवमवगम्यते यत् काश्मीर देशे कदाचित् जयापीडो नाम कश्चिन्नरपति एकोनाशीत्युत्तरसप्तशतमित (७७९) खृष्टीयाब्दादारभ्य त्रयोदशाधिकाष्टशतसंख्यक (८१३) खृष्टाब्दं यावत् चतुस्त्रिंशत (३४) वत्सरान् काश्मीरराज्यशासनमलञ्चकार । स चात्मन कवित्वशक्तिमत्तया बहून्

सुकविपण्डितान् सबहुमानमानाय्य स्वस्य सदसि समतिष्ठिपत्[1]। तेषु च भट्टोद्भट दामोदरगुप्त मनोरथ, शङ्खदत्त, चटक, सन्धिमान् वामन, क्षीरश्चैतेऽष्टौ महाकवयः प्रधानपदवीमध्यरुक्षन्। तत्राप्युद्भटकविरेव प्रधानमासीत्। स च स्वरचिताभिरुच्चावचमधुरकविताभिर्जयापीडमहाराजं सुपरितोष्य तत्सकाशात् प्रतिदिनं लक्षं दीनारानलभत। एतेनैव महाकवेरुद्भटस्य महत्त्वा कवित्वशक्तेः कीदृक् चित्तचमत्कारित्वं तदनुमानञ्च सर्व्वं सुगममेव। भूपतेर्जयापीडस्य च निरतिशयकवित्वप्रियतया तस्य सभा बहुसुपण्डितसनाथा शुशुभे। इदमेवाभिप्रेत्य कह्लणकवे सूक्तमेतत्—

"समग्रहीत् तथा राजा सोऽन्विष्य निखिलान् बुधान्।
विद्वद्भिर्दुर्भिक्षमभवद् यथाऽन्यनृपमण्डली॥"

राजतरङ्गिणी ४।४८३

जयापीडस्य राज्ञः कवेरुद्भटस्य चेतिवृत्तं सप्रमाणीकर्त्तु राजतरङ्गिण्याः[2] कतिचिदंशा उद्ध्रियन्ते। यथा—

"वचो मूर्खोऽयमित्येवं कश्चिदपि वदते स्फुटम्।
सर्व्वज्ञानं ददर्श्चक्रे सर्व्वान् विद्याभियोगिनः॥
देशान्तरादागमय्य व्याचक्षाणं क्षमापतिः।
प्रावर्त्तयत विच्छिन्नं महाभाष्यं महीतले॥
क्षीराभिधाच्छब्दविद्योपाध्यायात् सम्भतश्रुतः।
बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः॥
भूपतेरात्मना स्पर्द्धा चक्रमे न स कस्यचित्।
आत्मनस्तु बुधैः स्पर्द्धां शुद्धधीर्बह्वमन्यत॥
तावत् पण्डितशब्दोऽभूद् राजशब्दादपि प्रथा।
तैस्तैर्दोषैर्न तु स्थानि कालान्तरवदाययौ॥
नृपतौ विद्वदायत्ते राजसाम्मुख्यकाङ्क्षिभिः।
गृहा सभर्तुर्विदुषो व्याप्ता सेवागतैर्नृपैः॥
अध्यक्षो भक्तशालायां शुकदन्तश्च मन्त्रिषु।
विद्वत्तया यद्विद्याद्भुतेन सौकृत्यं गर्हितः॥

सहस्रान् दीनारलक्षेण प्रत्यह कृतवेतन ।
भट्टोऽभदुद्भटस्तस्य भूमिभर्तु सभापति ॥
स दामोदरगुप्ताख्य कुट्टनीमतकारिणम् ।
कवि कविं बलिरिव धुर्यं धीसचिव व्यधात् ॥
मनोरथ शङ्खदत्तश्चटक सन्धिमास्तथा ।
बभूवु कवयस्तस्य वामनाद्याश्च मन्त्रिण ॥"

राजतरङ्गिणी ४।४८७ ४९७

"अवस्थावेदिकास्तत्र ग्रथिता पृथिवीभुजा ।
आर्द्रान्ति करणं श्लोका अर्थ्यन्तेऽद्यापि सूरिभि ' ॥

राजतरङ्गिणी ४।१५०

उद्भटभट्टो हि कुमारसम्भव काव्यालङ्कारसंग्रह भामहालङ्कारविवरणानीति ग्रन्थत्रय मरचयत् । प्रतीहारेन्दुराजो नाम कश्चित काव्यालङ्कारसंग्रहस्य लघुवृत्तिनाम्नीं टीका प्रणीय तत्रैवोद्भटभट्टस्य सत्तद्ग्रन्थत्रयप्रणयनवार्ता निरदिशत् । बुलर् साहेब महोदयेन च काश्मीरदेशे काव्यालङ्कारसंग्रहमेकमासाद्य काश्मीररिपोर्टनामकपत्रस्य ६५ सख्यकपृष्ठे एवमुक्तम् "उद्भटभट्ट किल जयापीडस्य राज्ञ सकाशात् प्रतिदिन लक्षसंख्यकान् दीनारान् लभते स्म । स च कविर्न कश्चिद् ग्रन्थद्वयस्य प्रणिनाय तस्य स्वप्रणीते काव्यालङ्कारसंग्रहनामकेऽलङ्कारग्रन्थे यान्युदाहरणानि सन्ति तानि स्वरचितकुमारसम्भवा देवाहृतानी"ति ।

पिटार् पिटार्सन् साहेबोऽपि वक्ष्यमाणपद्यचतुष्टयमुद्भटकविकृतमिति प्रतिपादयामास । तद् यथा—

( १ )

"खिन्न स्वेन समुद्भटेन सरस स्वीय मनो जायते
श्रुत्वाऽन्यस्य समुद्भटं खलु मन श्रोतुं पुनर्वाञ्छति ।
यस्मात् ज्ञानवतोऽपि येन वयसा कर्तुं समर्थ सुधी
कार्यस्तस्य समुद्भटस्य मनुजैरावश्यक सग्रह ॥"

( २ )

"अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥"

( ३ )

"किं कौमुदी शशिकला सकला विचूर्ण्य
संयोज्य चामृतरसेन पुनः प्रयत्नात् ।
कामस्य घोरहरहुङ्कृतदग्धमूर्तेः
सञ्जीवनाय धरणी विहिता विधात्रा ॥"

( ४ )

"किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापै-
र्द्वयमिह पुरुषाणां सर्वदा सेवनीयम् ।
अभिनवमदलीलालालसं सुन्दरीणां
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥"

यदाहं बाल्ये वयसि वर्त्तमानः कलिकाताख्य राजकीय इङ्गरेजीविद्यालयप्रविष्टोऽप्य-वसरक्रमेण परमपूज्यपादस्य मदीयगुरोः स्वर्गतकालीकुमारकाव्यरत्नमहोदयस्य चतु-ष्पाठीमाश्रित्य काव्यव्याकरणान्यधीयानः कालमनयं तदा प्रायशो गुरुमुखाद् बह्वीरुद्भट-कविता अशृणवम् ताश्च सायहमलिखम्। अथोक्तविद्यालयप्रवेशमाहात्म्यात् सौभाग्यवशाद-खिलजनमाननीयस्य महात्मनः स्वर्गतस्य ईश्वरचन्द्रविद्यासागरस्य भूदेवमुखोपाध्यायस्य च स्नेहास्पदीभूय तयोः सकाशात् प्रायेण पञ्चशतश्लोकान् समग्रहीषम्। तदनु स्वर्गत महाराज बाहादुर यतीन्द्रमोहनठाकुरस्य मातृश्राद्धावसरे नानादिग्देशादागतानां परमपूज्यपादानां ब्राह्मणपण्डितानां कृपया उद्भटश्लोकानां त्रीणि सहस्राणि मया समाहृतानि। एवंक्रमेण भारतस्य नानास्थानेभ्यो बहुतरप्राचीनपुस्तकेभ्यश्च श्लोकसंग्रहेण साम्प्रतं मदन्तिके द्वाविंशतिसहस्राधिकलक्षसंख्यका उद्भटश्लोकाः सन्ति।

एषूद्भटश्लोकेषु रसभावभरिता बहवो मधुरश्लोका बहुभाषाकपद्यानुवादे सह क्रितवादि एडुकेशनगेजेट प्रभृतिषु संवादपत्रेषु प्रकाशिताः सौष्ठवातिशयेन सर्वेषां ।हृदयान्यनन्दयन्।

स्वदेशीया वैदेशिकाश्च बहवो गुणग्राहिण: पण्डिता मन्मुखात् समानुष्टुप्श्लोका नाकर्ण्य परमानन्दमलभन्त। मिनिस् टनि थिव पिटार्सन् प्रभृतय: कतिपये संस्कृत भाषानुरागिण: साहिब महोदया मत्कृतोष्ट्रश्लोकान् समाकर्ण्य संस्कृतभाषाया माधुर्यम् उष्ट्रश्लोकरचयितॄणां कवीनाञ्च नैपुण्यं नितरां प्राशंसिषु।

अस्मिन् ग्रन्थे श्लोकनिचयस्य पाठच्छन्दोव्याकरणशुद्धिनिमित्तं मया बहुल: प्रयास: कृत:। परन्तु केषाञ्चित् श्लोकानां तात्पर्यं किञ्चिदस्पष्टमस्ति। तदर्थसमन्वयस्तु पाठकवृन्दै: कृपया कार्य्यं इत्यभ्यर्थये। अन्यच्च ईदृशा अपि द्वित्रा: श्लोका अत्र निवेदु ये च ग्रन्थान्तरविशेषेऽपि सन्निविष्टा: सन्ति। तज्जनितो ममापराध: सदयै: महृदय पाठकै: क्षन्तव्य इत्यपि प्रार्थये। बहुजनमुखत आकर्ण्य सङ्गृहीतेऽस्मिन् श्लोकसमूहे यदि कुत्रचित् कश्चिद् भ्रम: प्रमादो वा स्यात् तत्र विचित्रम्। तदर्थं पाठकवृन्द सविनयं निवेदयामि यदि तत्तद्वैगुण्यं कृपया मां विज्ञापयेत तदा मे परमोपकारो भवेत् तदर्थञ्चाहं तेषां चरणतले कृतज्ञ: स्थास्यामि। कर्त्तव्यञ्चैतन्महद्भि:। तथाचोक्तं

"गच्छत: पतनं भूमौ प्रमादान्नहि विस्मय:।
हसन्ति दुर्जनास्तत्र तोलयन्ति तु सज्जना:॥"

बहुभाषावित् पण्डितप्रवरो मदीयपरमसुहृत् स्वर्गतो हरिनाथ दे एम ए महोदय: मन्मुखाद् उष्ट्रकविता: शुश्रूषमाणो विश्वविद्यालयस्य सहकारि रेजिष्टार पदाभिषिक्त श्रीयुक्त गिरिशचन्द्र मुखोपाध्याय एम् ए महानुभवमनुरुद्धवान्। अहमपि तदर्थं "इम्पिरियाल लाइब्रेरी" नामकपुस्तकालयं गत्वा तावुभावुष्ट्रकविताममश्रावयम्। तौ च तामाकर्ण्य परां प्रीतिमलभेताम्। स च हरिनाथस्तदानीमेवमुक्तो मया, यत् बहुभाषाभिज्ञ पण्डितो भवान् यदि मां यत्र कुत्रचिद् भाषाया य: कमपि रसभावमयं श्लोकं श्रूयात् तदा ततोऽप्यधिकप्रकर्षवत्तया चित्तचमत्कारिणं संस्कृतश्लोकं भवन्तमहं श्रावयितुं शक्नोमीति मनो। अथैतदाकर्ण्य सोऽपि ल्याटिन् ग्रीक् फ्रेञ्च जार्म्मान् इंराजी आरव्य पारसीकाद्यनेकभाषाणां विविधविषयभेदभिन्नान् भावान् मामश्रावीत्, अहञ्च तत्तद्भाव मयमधुरोष्ट्रश्लोकान् श्रावयित्वा तं नितरामप्रीणयम्। तदानीं तया प्रीणितेन तेनोक्तम् "अस्मद्देशीयब्राह्मणपण्डिता यथा सकौशलं मधुरभावसन्निवेशनेन संस्कृतोष्ट्र श्लोकान् रचयामासुस्तया रीत्या श्लोकान् रचयितुं संस्कृतभाषाविदन्य: कोऽपि पार्थिव

कविर्न शशाक। इयञ्च दैवी भाषा सगुणालङ्कारा सती यथा रसभावादिकं पुष्णाति काप्यन्या मानवी भाषा न तथेति।

यदाहं जयपुरप्रदेशमगमं तदा परमपूजनीयस्य पण्डितप्रवरस्य महामहोपाध्याय श्रीयुक्त हरप्रसाद शास्त्रि एम् ए, सि आइ इ महोदयस्य कनिष्ठसहोदरेण प्रवतत्त्वविद् पण्डितेन स्वर्गत मेधनाद भट्टाचार्य वि ए महानुभवेन सह मम सप्रेमपरिचय सञ्जातः। स च मां जयपुरमहाराजस्य पुस्तकागारं नीत्वा बह्वनामुद्भटकवितानां प्राचीनपुस्तकान्यदर्शयत्। ममास्मिन्ग्रन्थसागरे पाठान मोगल नवाब प्रभृतीनां वर्णन समाया ये श्लोका सन्ति तान् सर्व्वान् स एव मे प्रादात्। साम्प्रतं स महात्मा यदाजीविष्यत् तदा मे महोपकारोऽभविष्यत्। मन्ये ममैव दुरदृष्टतया स इदानीं दिवं गतः।

अथैकदा माननीयौ धर्माधिकरणिकवर प्रातःस्मरणीयो संस्कृतभाषाविशारद संस्कृतोद्भटकवितासु परानुरक्तिमान् स्यार् श्रीयुक्त गुरुदास बन्द्योपाध्याय केटि एम् ए, डि एल्, पि एच् डि महोदयो मत्तो बहुद्भटकविता निशम्य तासां प्रशंसि प्रसङ्गेन मामवदत्—"एकैका उद्भटकविता एकैकमनर्घरत्नम्। ईदृश्य प्राञ्जा कविता क्वाप्यन्य सन्तीति रत्नाकरोऽसीति अथ तस्यैव महात्मन कतिपयैस्तामकूटविषयकै श्लोकै प्रयोजनमासीदिति तद्विषया वङ्गानुवादसनाथा कतिपये श्लोका मया सदन्तिकं प्रेषिता। स चैतान् इंराजीभाषयानूद्य माननीय सुपण्डित आधनाभिध राजपुरुष श्रावयित्वा परमप्रीणयत्। तत स मामवोचत्— भद्र। एतान्यनर्घाणि भारत रत्नानि साधारणसमक्षमुपस्थाप्य विधीयतां परोपकृतिर्न्नैशस। श्रावितात्मा राजपुरुषा भवतोऽभिमतम्। अहमपि साहाय्यं ते करिष्यामि। लायन् साहेवोऽपि भवत्प्रदत्तान् उद्भटश्लोकानाकर्ण्य परां तुष्टिमुपागमत्।'

कलिकाताराजकीयसंस्कृतविद्यामन्दिराध्यक्षो मदीयपरमहितैषी महात्मा पण्डित प्रवरो महामहोपाध्यायो डक्टार् श्रीयुक्त सतीशचन्द्र विद्याभूषण एम् ए पि एच् डि एफ् ए एस् वि महोदयो मत्सकाशात् श्रुतोद्भटश्लोक परां प्रीतिमुपागमत्तेषां श्लोकानां मुद्रणाय च मां प्रोत्साहितवान्।

इत्यवादि पत्रिकायां मनोज्ञश्लोकानां मुद्रणकाले अहमेकदा भ्रमणाय कटक प्रदेशमगमम्। तत्रत्यस्य प्रधानस्य व्यवहारजीवस्य श्रीयुक्त जानकीनाथ वसु एम् ए

वि एल् महोदयस्य साहाय्येन परमविद्यानुरागिणा स्वर्गतेन मयूरभञ्जाधिपतिना महाराज वाहादुर श्रीश्रीरामचन्द्र भञ्ज देव महोदयेन सह सङ्गतो मे सम्वृत्त । अहो महात्मा मम उद्भटश्लोकान् शुश्रूषुरिति विज्ञाय तमह कतिपयान् श्लोकानश्रावयम्। स च नितरां प्रीतो मुद्रासहस्र मे प्रत्यग्रहीत्। पर ममाधन्यतया सोऽचिरादेव पञ्चत्वमुपागत ।

कलिकाता पाथुरियाघाटा वास्तव्यो महाराज स्वर्गतो महानुभावो यतीन्द्रमोहन ठाकुर संस्कृतभाषायां सुपण्डित उद्भटकवितायां परमानुरक्तश्चासीत्। हितवादि पत्रिकायाम् एडुकेशनगेजेटे च यानुद्भटश्लोकानह प्राकाशय स बहुमान तानपठत् परा प्रीतिञ्चालभत। अथ मन्मुखाद् उद्भटकविता श्रोतुकामस्तदीय सभापण्डितं नैयायिक चूडामणि मदीयपरमहितैषिण सुहृद परमपूज्यपाद श्रीयुक्त पार्वतीचरण तर्कतीर्थ महोदयमनुरुद्धवान्। ततोऽह "एमारेल्ड् वाओयार गत्वा तमुद्भटश्लोकान श्रावितवान्। तत प्रभृति स प्रतिसप्ताहमेव मन्मुखाद् उद्भटकविता शृणोति स्म। अतिविरलो हि तत्सदृश सुरसिक सुपण्डितश्च श्रोता। अहो मे दुर्दैवं यत् सोऽधुना दिव गत इति।

उद्भटकविताकोविदो मनस्विवर्य्य पण्डितप्रवरो महात्मा राय श्रीयुक्त राजेन्द्र चन्द्र शास्त्रि वाहादुर एम् ए, पि आर् एस् महोदय कृपयाऽतीतपञ्चविंशतिसंख्यकवत्सरेषु बहूनि नवीनानुद्भटपद्यानि सगृह्य मह्य समर्प्य च मम महोपकारमकार्षीत्। उद्भटकवितासु तस्य सहज परमनुरागो वर्त्तते। तत एव यत्र कुत्रचिदुद्भटकवितार्थं याच्यमानोऽप्यसौ कदाचित् पराङ्मुखो नाभूत्। पण्डितायगण्येन मदीयपरमहितैषिणा उद्भटकवितानुरागिणा कलिकाता संस्कृत विद्यामन्दिरस्य अध्यक्षचरेण महामहोपाध्याय श्रीयुक्त कालीप्रसन्न भट्टाचार्य्य विद्यारत्न एम् ए महोदयेन तथा नवद्वीपपुण्यभूमिवास्तव्येन श्रेयालङ्कारसनाथश्लोकरचनासिद्धहस्तेन मदीयपरमभक्तिभाजनेन महामहोपाध्याय श्रीयुक्त जितनाथ न्यायरत्न महानुभवेन च ममैतदुद्भटसागरस्य पाण्डुलिपिः कृपया परिदृष्टा।

हितवादि -सम्पादकौ स्वर्गतकालीप्रसन्नकाव्यविशारद श्रीचन्द्रोदयविद्याविनोदौ, "वङ्गवासि -स्वत्वाधिकारी स्वर्गत योगेन्द्रनाथ वसु, 'वङ्गवासि"-सम्पादक श्रीविहारि लाल सरकार, "एडुकेशन गेजेट'-स्वत्वाधिकारी श्रीमुकुन्ददेव मुखोपाध्याय राय

वाहादुर एम् ए, वि-एल् 'वसुमती'-सम्पादकवर, श्रीजलधर सेन,—एते उद्भट कवितानुरागिणः सुपण्डिता सहृदया महोदया परमप्रीतिभर सानुकम्पं स्वस्वसंवादपत्रेषु बहुदिनपर्य्यन्तं महता बहुला उद्भटकविता मुद्रितवन्त ।

एते महामहोपाध्यायादयो महानुभवा पण्डिता उद्भटसागरसङ्कलने साहायक कुर्व्वन्तो मां नितरां प्रोत्साहितवन्त —

( १ ) काशीधामनिवासिन.—स्वर्गत महामहोपाध्याय राखालदास न्यायरत्न, स्वर्गत महामहोपाध्याय कैलासचन्द्र शिरोमणि महामहोपाध्याय शिवकुमार शास्त्री, महामहोपाध्याय सुब्रह्मण्य शास्त्री स्वर्गत महामहोपाध्याय गङ्गाधर शास्त्री, स्वर्गत महामहोपाध्याय दामोदर शास्त्री, स्वर्गत महामहोपाध्याय गोविन्द शास्त्री स्वर्गत महामहोपाध्याय राममिश्र शास्त्री, स्वर्गत महामहोपाध्याय सुधाकर द्विवेदी, महामहोपाध्याय विन्ध्येश्वरीप्रसाद, स्वर्गत सुरेन्द्रनाथ तर्कतीर्थ श्रीवामाचरण न्यायवैशेषिकाचार्य, कविराज श्रीयुक्त उमाचरण कविरत्न स्वर्गत हरकुमार शास्त्री श्रीगौरीशङ्कर तर्करत्न श्रीप्रियनाथ तत्त्वरत्न, श्रीदक्षिणाचरण विद्यानिधि, श्रीहाराणचन्द्र विद्यारत्न व्याकरणोपाध्याय, श्रीहरिहर शास्त्री, श्रीविजयकृष्ण काव्यतीर्थ वेदान्तवागीश श्रीताराचरण काव्यतीर्थ साहित्योपाध्याय., श्रीश्यामाकान्त काव्यतीर्थ, स्वर्गत हरनाथ विद्यारत्न ।

( २ ) मिथिलानिवासिन —स्वर्गत विश्वनाथ ओझा, स्वर्गत दीननाथ मिश्र ।

( ३ ) उत्कलनिवासिन —महामहोपाध्याय श्रीसदाशिव मिश्र, स्वर्गत राय राधानाथ राय वाहादुर, जानकीनाथ वसु एम् ए, वि एल् ।

( ४ ) वङ्गदेशनिवासिन —( क ) स्वर्गत महामहोपाध्याय महेशचन्द्र न्यायरत्न, स्वर्गत महामहोपाध्याय चन्द्रकान्त तर्कालङ्कार स्वर्गत महामहोपाध्याय कृष्णनाथ न्यायपञ्चानन स्वर्गत महामहोपाध्याय दीनबन्धु न्यायरत्न स्वर्गत महामहोपाध्याय रामनाथ सिद्धान्तपञ्चानन, स्वर्गत महामहोपाध्याय श्रीरामशिरोमणि, स्वर्गत महामहोपाध्याय यदुनाथ सार्व्वभौम, स्वर्गत महामहोपाध्याय राजकृष्ण तर्कपञ्चानन स्वर्गत महामहोपाध्याय द्वारकानाथ सेन स्वर्गत महामहोपाध्याय विजयरत्न सेन ।

( ख ) महामहोपाध्याय श्रीहरप्रसाद शास्त्रि एम् ए, सि आइ इ महामहोपाध्याय श्रीकामाख्यानाथ तर्कवागीश महामहोपाध्याय श्रीचन्द्रचन्द्र सार्व्वभौम, महामहोपाध्याय

श्रीयादवेश्वर तर्करत्न, महामहोपाध्याय श्रीप्रमथनाथ तर्कभूषण, महामहोपाध्याय श्रीगुरुचरण सर्व्वदर्शनतीर्थ ।

( ग ) स्वर्गत गिरिशचन्द्र विद्यारत्न स्वर्गत नवीनचन्द्र विद्यारत्न स्वर्गत हरिश्चन्द्र तर्करत्न स्वर्गत गुरुनाथ काव्यतीर्थ स्वर्गत कृष्णकुमार विद्यारत्न स्वर्गत तारकचन्द्र सांख्यसागर स्वर्गत भगवतीचरण स्मृतितीर्थ स्वर्गत सूर्य्यकुमार भट्टाचार्य्य स्वर्गत ताराप्रसन्न सेन कविराज, स्वर्गत रामचन्द्र विद्याविनोद कविराज स्वर्गत नीलकान्त तर्कवागीश स्वर्गत गुरुचरण विद्याभूषण स्वर्गत कालीकुमार तर्कतीर्थ स्वर्गत दुर्गाचरण तर्करत्न ।

( घ ) श्रीपार्व्वतीचरण तर्कतीर्थ श्रीभुवनेश्वर विद्यालङ्कार श्रीकालीपद काव्य तीर्थ, श्रीहरचन्द्र तर्कपञ्चानन, श्रीहरिश्चन्द्र कविरत्न श्रीदुर्गाचरण सांख्यवेदान्त तीर्थ श्रीराजेन्द्रनाथ विद्याभूषण श्रीयामिनीनाथ तर्कवागीश श्रीदेवेशचन्द्र विद्या रत्न, श्रीहरिचरण काव्य व्याकरण तीर्थ श्रीधीरानन्द काव्यनिधि श्रीय‍ेश्वर काव्यतीर्थ, श्रीगोविन्दचन्द्र विद्याभूषण श्रीरसिकमोहन विद्याभूषण कविराज श्रीयामिनीभूषण राय कविरत्न एम् ए एम् बि, श्रीनिवारणचन्द्र भट्टाचार्य्य ।

( ङ ) राय श्रीयतीन्द्रनाथ चौधुरी श्रीकण्ठ एम् ए वि एल् राय श्रीविनोद विहारि वसु वि ए स्वर्गत अमृतलाल मुखोपाध्याय एम् ए, वि एल् स्वर्गत आशुतोष विश्वास एम् ए वि एल् श्रीद्वारकानाथ चक्रवर्त्ति एम् ए वि एल श्रीगिरिशचन्द्र मुखोपाध्याय एम् ए स्वर्गत कालीप्रसन्न घोष विद्यासागर श्रीयुक्त आनन्दचन्द्र राय, स्वर्गत इन्द्रनाथ वन्द्योपाध्याय एम् ए, वि एल् श्रीयुक्त अक्षयचन्द्र सरकार वि एल् स्वर्गत रजनीकान्त सेन वि एल् ।

( च ) मयमनसिंहजेलान्तर्गतसुसङ्गदुर्गापुराधिपति महाराज वाहादुर श्रीयुत कुमुदचन्द्र सिंह वि ए, मुक्तागाछा वास्तव्या स्वर्गता राज्ञी विद्यामयी देवी राजा श्रीजगत्किशोर आचार्य चौधुरी, कुमार श्रीजितेन्द्रकिशोर आचार्य चौधुरी महाराज वाहादुर स्वर्गत सूर्य्यकान्त आचार्य चौधुरी ।

परिशेषे मन्तव्यमेतद् विशेषवक्तव्यं यत् कलिकाता संस्कृतविद्यालयाध्यापकवर प्रात स्मरणीय परमपूज्यपादो नवद्वीपनिवासी पण्डितप्रवरो महात्मा श्रीयुक्त शिवनारायण

शिरोमणिस्तथा सुपण्डितसदीयपुत्त्र कलिकाता संस्कृतविद्यालये वर्त्तमानव्याकरणाध्यापको मदीयकनिष्ठसहोदरप्रतिम श्रीयुक्त मन्मथनाथ विद्यारत्नो महोदय, हावडा-जेलान्तर्गतशिवपुर-वास्तव्य पण्डितकुलतिलकः परमपूजनीयो महात्मा श्रीयुक्त श्यामाचरण कविरत्न महानुभवश्च ग्रन्थस्यास्य मङ्गलार्थे निःस्वार्थतया परमप्रीतिमत्तया च मम यथेष्टमानुकूल्यमकुर्व्वन्। अतो मया प्रागुक्तानां सर्व्वेषां महात्मनामन्तिके यावज्जीव कृतज्ञेन भवितव्यमिति।

नानाशास्त्रसागरपारगस्य प्रातःस्मरणीयस्य परमपूज्यपादस्य सहृदयस्य श्रीयुक्तस्य स्यार् आशुतोष मुखोपाध्याय कैटि, सरस्वती शास्त्रवाचस्पति सम्बुद्धागमचक्रवर्त्ति विद्यार्णव-महोदयस्य संस्कृतभाषायां निरतिशयानुरक्तिमत्तया भारतभूमेर्लुप्तप्रायोद्भटकवितारत्नानां समुद्धरणार्थं सातिशययत्नवत्तया च तस्यैव महापुरुषस्य परमपवित्रे श्रीकरकमले उद्भटसागराख्योऽयं ग्रन्थः सभक्तिविनयं समर्प्यते

भद्रकाली।
कोतर पोष्ट अफिस्, जेला हुगली।
२४ श्रावण, जन्माष्टमी १३२४
वङ्गाब्दा। ९ आगष्ट वृहस्पतिवार
१९१७ खृष्टीयाब्दा।

तदीयश्रीचरणाश्रितेन कृतज्ञेन
उद्भटसागरोपाधिकेन
श्रीपूर्णचन्द्रेण।

## तृतीयावृत्तिः।

तृतीयावृत्तावस्मिन्नुद्भटसागरे होरेस्-हैम्यान्-उइल्सन् साहेबादि विरचिताः कतिपया कौतूहलोद्दीपिका अभिनवा कविताः सन्निवेशिता प्रथमावृत्तौ स्खलनजाः केचिद् दोषाश्च यथाशक्ति संशोधिता। शिवपुर-वास्तव्यो वाराणसीस्थ-सारदामठ वेदान्ताध्यापक श्रीश्यामाचरण कविरत्न, काशीधामनिवासी नैयायिकप्रवर, कविकुलतिलक श्रीहरिहर शास्त्री, कलिकाता संस्कृतकलेजाध्यापको वैयाकरणकेशरी श्रीमन्मथनाथ विद्यारत्नो महाशयश्च उद्भटसागरे तृतीयावृत्तौ सविशेषं साहाय्यं विदधुः। अतस्तेषामृतजता-पाशेनावद्धोऽहं तैर्मङ्गलमभिराजीविषम्।

भद्रकाली।
कोतरं पोष्ट-अफिस, जेला हुगली।
११ आश्विन, रविवार, १३३२ वङ्गाब्दा।
(श्रीविजया दशमी)
२० सेप्टेम्बर, १९२५ खृष्टीयाब्दा।

उद्भटसागरोपाधिकः
श्रीपूर्णचन्द्रः।

# उद्भट-सागरः

## प्रथम-प्रवाहः ।

### विषय-सूची ।


| विषयः | श्लोकाङ्कः |
|---|---|
| ग्रन्थारम्भः ... ... | १-२ |
| देवता-तरङ्गः ... ... | ३-२४ |
| परब्रह्म ... | ३-४ |
| ब्रह्मा ... ... | ५ |
| सरस्वती ... | ६-८ |
| विष्णुः ... ... | ९-१० |
| लक्ष्मी . | ११ |
| लक्ष्मी-लीला ... .. | १२ |
| रामचन्द्रः | १३ |
| सीता .. . | १४ |
| कृष्णः ... ... | १५-१८ |
| कृष्णलीला .. .. | १९ |
| राधिका ... ... | २० |
| शिवः ... ... | २१-२४ |
| शिवलीला ... ... | २५-२६ |
| पार्वती ... ... | २७-२८ |

| विषयः | | | श्लोकाङ्कः |
|---|---|---|---|
| गङ्गा | ... | ... | २९-३२ |
| मूर्त्ति-समष्टिः | ... | ... | ३३-३४ |
| हरगौरी-मूर्त्ति. | ... | ... | ३३ |
| शिव राम-मूर्त्ति | ... | ... | ३४ |
| जीव-तरङ्गः | ... | ... | ३५-६२ |
| राजा | ... | ... | ३५-३६ |
| मन्त्री | ... | ... | ३७ |
| **विशिष्टराजः ।** | | | |
| आकवरः | ... | ... | ३८ |
| प्रतापादित्यः | ... | ... | ३९ |
| कृष्णचन्द्रः | ... | ... | ४० |
| **जन्तुवर्गः ।** | | | |
| अश्वः | ... | ... | ४१ |
| उष्ट्र | ... | ... | ४२ |
| काकः | ... | ... | ४३-४४ |
| काककोकिलौ | ... | ... | ४५ |
| कोकिलः | ... | ... | ४६ |
| खद्योत | ... | ... | ४७ |
| गर्द्दभ | ... | ... | ४८ |
| चातकः | ... | ... | ४९ |
| धेनु | ... | ... | ५० |
| भेकः | ... | ... | ५१ |
| भ्रमर | ... | ... | ५२ |

| विषयः | श्लोकाङ्कः |
|---|---|
| मत्स्यरङ्ग | ५३ |
| मयूर | ५४ |
| मृग. | ५५ |
| वृश्चिक | ५६ |
| शफरी | ५७ |
| शुक | ५८ |
| सर्प ( अनन्त ) | ५९ |
| सिंह | ६० |
| हंस | ६१ ६२ |
| उद्भित् तरङ्गः | ६३-८३ |
| सामान्य वृक्षः | ६३-६५ |
| अर्क | ६६ |
| अश्वत्थ | ६७ |
| इक्षु | ६८ |
| कल्पतरु | ६९ |
| कार्पास | ७० |
| केतकी | ७१ |
| चन्दन | ७२ |
| ताल | ७३ |
| दूर्वा | ७४ |
| द्राक्षा | ७५ |
| नारिकेल | ७६ |
| निम्ब | ७७ |
| पद्मम् | ७८ |

| विषयः | श्लोकाङ्कः |
|---|---|
| पनस | ७९ |
| पलाश | ८० |
| वेतस | ८१ |
| शालि | ८२ |
| सहकार | ८३ |
| **स्वभावोक्ति तरङ्गः** | **८४ ८९** |
| पर्वत ( मलय ) | ८४ |
| सागर | ८५ ८७ |
| सुवर्णम् | ८८ ८९ |
| **निन्दा-प्रशंसा तरङ्ग** | **९० १२८** |
| **(क) निन्दा तरङ्ग** | **९० ११२** |
| अप्रवास निन्दा | ९० |
| असन्तोष निन्दा | ९१ |
| उदर निन्दा | ९२ |
| कृपण निन्दा | ९३ |
| कुकवि निन्दा | ९४ |
| कुपुत्र निन्दा | ९५ |
| कुवैद्य निन्दा | ९६ |
| कुसंसर्ग निन्दा | ९७ |
| कृतघ्न निन्दा | ९८ |
| कुपथ निन्दा | ९९ |
| खल निन्दा | १०० |
| गृहविहीन निन्दा | १०१ |
| दारिद्र्य निन्दा | १०२ १०४ |

| विषयः | | | श्लोकाङ्कः |
|---|---|---|---|
| दुर्जन-निन्दा | ... | ... | १०५-१०६ |
| धनि-निन्दा | ... | ... | १०७ |
| निर्गुण-निन्दा | ... | ... | १०८ |
| परगृहवास-निन्दा | ... | ... | १०९ |
| भिक्षुक-निन्दा | ... | . | ११०-१११ |
| मद्यपान-निन्दा | ... | ... | ११२ |
| (ख) प्रशंसा-तरङ्गः | ... | ... | ११३-१३८ |
| उद्भट-कविता-प्रशंसा | ... | .. | ११३-११४ |
| कवि-प्रशंसा | ... | | ११५ |
| काव्य प्रशंसा | ... | ... | ११६ |
| गुण-प्रशंसा | ... | | ११७-११८ |
| गृहविशेष प्रशंसा | ... | ... | ११९ |
| चरित्र-प्रशंसा | ... | . | १२० |
| दान-प्रशंसा | ... | ... | १२१-१२२ |
| धनि-प्रशंसा | ... | ... | १२३ |
| नारी-प्रशंसा | ... | . | १२४ |
| पण्डित-प्रशंसा | ... | . | १२५-१२६ |
| परोपकार-प्रशंसा | ... | . . | १२७ |
| पुत्र-प्रशंसा | ... | . . | १२८ |
| प्रवास प्रशंसा | ... | ... | १२९ |
| महत्त्व प्रशंसा | ... | ... | १३० |
| मित्र-प्रशंसा | ... | ... | १३१ |
| विद्या प्रशंसा | . . | ... | १३२ |
| वीर-प्रशंसा | ... | ... | १३३ |
| सन्तोष-प्रशंसा | ... | ... | १३४ |

| विषयः | | श्लोकाङ्कः |
|---|---|---|
| सहाय प्रशंसा | . | १३५ |
| सुजन प्रशंसा | | १३६ |
| सुपुत्र प्रशंसा | | १३७ |
| सुसंसर्ग प्रशंसा | | १३८ |
| **रस तरङ्गः** | .. | **१३९ १४९** |
| **(क) करुण रसः** | .. | **१३९** |
| **(ख) शान्त रसः** | | **१४०-१४८** |
| उपदेश | | १४० |
| कर्मफलम् | | १४१ |
| कालचरित्रम् | | १४२ |
| दैवबलम् | | १४३ १४४ |
| विवेक | | १४५ |
| विषय भोग दूषणम् | | १४६ १४७ |
| वैराग्यम् | | १४८ |
| **(ग) हास्य रसः** | | **१४९** |
| **विविध तरङ्ग.** | .. .. | **१५०-१५६** |
| आय व्ययौ | | १५० |
| कस्तूरी | | १५१ |
| तुलादण्ड | | १५२ |
| दारिद्र्य विमोचनोपाय | | १५३ |
| विद्याधनोपार्जनम् | .. | १५४ |
| श्रद्धा यशौ | ... | १५५ |
| सुजन दुर्जन पार्थक्यम् | | १५६ |
| **परिशिष्टम् ( टिप्पणी )** | ... | **१५६ श्लोकात् परम् ।** |

# उद्भट-सागरः ।

## प्रथम-प्रवाहः ।

## श्लोक-सूची ।

### ( अ )


| श्लोकाद्यांशः | | | श्लोकाङ्कः |
|---|---|---|---|
| अखिलेषु विहङ्गेषु हन्त | .. | ... | ५८ |
| अगाधजलसञ्चारी विकारी | .. | ... | ५७ |
| अधःकरोषि यद् रत्न मूर्ध्नि | ... | ... | ८६ |
| अधमा धनमिच्छन्ति धनमानौ च | ... | ... | १५६ |
| अधो गत्वा स्वय मुद्रा उत्थाप्यन्ते | ... | .. | १३० |
| अपूर्वे तव भाण्डारं मात | ... | ... | ७ |
| अपूर्वा दृश्यते व्याली खलानन | ... | . | १०० |
| अयि तुरङ्ग कुरङ्गशिशो | ... | ... | ४१ |
| अयि त्यक्तासि कस्तूरि पामरैः | ... | ... | १२१ |
| अवगाहस्व वाग्देवि रम्य | ... | ... | ६ |
| अस्ति चेत् पानस बीज | ... | ... | ७९ |
| अहं पिको भवान् काकः | ... | ... | ४५ |
| अहो मोहो वराकस्य काकस्य यदसौ | ... | ... | ४३ |


### ( आ )


| | | | |
|---|---|---|---|
| आर्धं व्ययस्व मध्यस्था व्ययमेव | ... | | १५० |


### ( उ )


| | | | |
|---|---|---|---|
| उच्चैस्तरोऽपि विटपी | .. | | ७३ |
| उदारस्य तृणं वित्तं शूरस्य | ... | ... | १३४ |
| उद्घाटितनवद्वारे पञ्जरेऽस्मिन्विहङ्गमः | ... | ... | १४८ |
| उदयन्तु शतमादित्या उदयन्तु | ... | ... | १२५ |
| उपनीतं न जानाति | ... | ... | ९९ |


### ( ए )


| | | | |
|---|---|---|---|
| एक एव खगो मानी चिरं | ... | ... | ४९ |
| एकचक्रो रथो यन्ता विकलो | ... | ... | १११ |

| श्लोकाद्यांश | श्लोकाङ्क |
|---|---|
| एकभूरुहयोरेकदलयो | ८२ |
| एकमेव पुरस्कृत्य दश जीवन्ति | १०८ |
| एका भार्या समररसिका | २६ |
| एकेनापि सुपुत्रेण सिंही | १३७ |
| एको हि दोषो गुणसन्निपाते | १०२ |
| ( क ) | |
| कस्यारिचरणोद्धूतसिन्धुकल्लोल | ६१ |
| कमले कमला शेते हर शेते | १४९ |
| करिष्यामि करिष्यामि करिष्यामीति | १४६ |
| करोतु तादृशीं प्रीतिं यादृशी | १२१ |
| कल्पवृक्षोऽपि कालेन भवेद् | ६९ |
| कालिमाश्रयते काको भिक्षुणा न तु | ११० |
| कान्तोऽसि नित्यमधुरोऽसि | ६८ |
| कालीघट्टे कली काले किल्विषी | ३२ |
| किं काव्येन कवेस्तेन | ९४ |
| किं तेन हेमगिरिणा रजताद्रिणा वा | ८४ |
| किमकारि न कार्पण्य कस्यालङ्घि | ९२ |
| केतकीकुसुम भृङ्गश्छिन्नपाणोऽपि | ७१ |
| क्षणशः कणशश्चैव विद्यामर्थंच साधयेत् | १५४ |
| क्षीरसारमपहृत्य शङ्कया स्वीकृत | १९ |
| ( ख ) | |
| खरोऽपि प्रचुर भार नित्यं वहति | ४८ |
| ( ग ) | |
| गिरिर्महान् गिरेरब्धिर्महानब्धे | ९१ |
| गुणदोषौ बुधो गृह्णन् | १२६ |
| गुणाः सर्वत्र पूज्यन्ते | ११७ |
| गुणे सर्वज्ञकल्पोऽपि सीदत्येको | १२५ |
| गृही चेत् समवाप्नोति गृहिणीं | १२४ |
| गोपाल इति मत्वा त्वां प्रचुर | १६ |
| ग्रीष्मकाले दिनं दीर्घं शीतकाले तु | १०५ |

| श्लोकाद्यांश | श्लोकाङ्क |
|---|---|
| ( च ) | |
| चन्दनं शीतलं लोके चन्दनादपि | १३८ |
| ( छ ) | |
| छायामन्यस्य कुर्वन्ति तिष्ठन्ति | ६२ |
| ( ज ) | |
| जठरवसतिकाले कीदृशी यन्त्रणा स्यात् | २९ |
| जलमन्नं तथा काव्यं त्रीणि रत्नानि | ११६ |
| जिता धनवता दारा जिता बलवता | १५३ |
| ज्यैष्ठ्यं जन्मना नैव गुणैर्ज्यैष्ठ्यं | ११८ |
| ज्योतिरिङ्गण कथं न लज्जसे | ४७ |
| ( त ) | |
| तं वन्दे पद्मसद्मानमुपवीत | ५ |
| तावद् गर्जति मण्डूक | ५१ |
| तुल्यवर्णच्छदः कृष्णः कोकिलैः सह सङ्गतः | ४४ |
| तृणादपि लघुस्तूलस्तूलादपि च | १११ |
| तृणानि शुष्काणि वने चरित्वा | ५० |
| त्वयि वर्षति जीमूत सर्वं | ६६ |
| ( द ) | |
| दलानाञ्च फलानाञ्च सन्तु ते ते | ५९ |
| दासेरकस्य दासीयं बदरी यदि | ७५ |
| दासोऽहमिति मे बुद्धिरिति | १७ |
| दिग्वाससं गतव्रीडं जटिलं धूलिधूसरम् | १२८ |
| दिङ्मण्डलं परिमलैः सुरभीकरोति | ८३ |
| द्राक्षा म्लानमुखी जाता शर्करा | ११२ |
| ( ध ) | |
| धन्यं भारतभूतले प्रियतमं सारस्वतं | १ |
| धन्या कवीश्वरास्ते हि रससागरपारगा | ११५ |
| ( न ) | |
| न केवलं मनुष्येषु दैवं देवेष्वपि | ११४ |
| न दुःखं दहने धर्षे छेदने | ८९ |
| न भारा पर्वता भारा न भारा सप्त | ९८ |
| नमोऽस्तु विष्णवे सृष्टिस्थितिप्रलय | ९ |

| श्लोकाद्यांश | श्लोकाङ्क |
|---|---|
| न विप्रपादोदकपङ्किलानि | १०१ |
| नादान्तुषे पः पार किं न वेत्सि | ८ |
| निष्कलङ्को निरातङ्क पद्मिनी | ४० |
| निष्पिष्टापि पदाघाते खरतापे | ७४ |
| निसर्गेण विग्रहात्मा सुजनो | १३६ |
| नीरसान्यपि रोचन्ते कार्पासाना | ७० |
| नैराज्याय निषेव्यसे कथमहो | २४ |
| ( प ) | |
| पत्रपुष्पफलच्छायामूलवल्कल | ६४ |
| पार्वतीकुचिवालेन्दुभस्मन्दाकिनी | २२ |
| प्रतापादित्य भूपाल भाल मम विलोकय | ३६ |
| प्रथमवयसि पादं तोयमल्पं स्मरन्त | ७६ |
| प्रवन्ते प्रस्तरा नीरे मानुषा | १३२ |
| ( ब ) | |
| बहव फणिन सन्ति भेकभक्षणदक्षा | ५६ |
| ( भ ) | |
| भक्ते द्वेषी जड प्रीति | १०७ |
| भवन्ति नरका पापात् पाप | १३१ |
| भाषासु मधुरा मुख्या | ११४ |
| भुजङ्गानां विष दन्ते मक्षिकाणां | १०६ |
| ( म ) | |
| मकरन्द निरातङ्को लवणाम्भसि | ५३ |
| मन्दितो लङ्घितो यद्र | ८५ |
| मधुसूदनपादाब्जजात मधु | १० |
| मन्ये लक्ष्मि त्वया साह समुद्राद | १२ |
| मातापितृभ्यां कन्याया | १४ |
| मातापितृमयो बाल्ये यौवने | १४० |
| मूर्तिर्मदा विन्ध्यदलैर पूजा | २३ |
| मूलं भुजङ्गै शिखरं प्लवङ्गै | ८२ |
| माता मम नयो दारा विद्याबुद्धिविभूतय | १०३ |
| मल्लो बिभेषि किं मूढ भीत | १४५ |

| श्लोकाद्यांशः | श्लोकाङ्क |
|---|---|
| ( य ) | |
| यत्रास्ति भोगो न च तत्र | २८ |
| यथा तथापि य पूज्यो | ४ |
| यदा यदा यान्ति नरा हि | ३१ |
| यो न भ्रमति देशेषु न च ससेवते | ९० |
| यो हि भ्रमति देशेषु सेवते | १२९ |
| ( र ) | |
| रत्नाकरस्तव गृह गृहिणी च | १८ |
| रमणे त्व रसज्ञेति प्रथैव स्तूयसे | १३ |
| रसालशिखरासीना शत | ४६ |
| राजा बन्धुरबन्धूनां राजा | ३५ |
| राजानं प्रथमं विन्देत् | ३६ |
| रात्रौ जानु दिवा भानु कृशानु | १०४ |
| राधिकां नौमि नीलाब्जमदमोचनलोचनाम् | ७० |
| रोपिते सेविते किं ते | ९७ |
| ( ल ) | |
| लंघित चमस्त वचनोयमिद मयोर्न | ११ |
| लघुना सहजो लोको लघुतामेति | ९७ |
| ( व ) | |
| वन्दे गुरुदेवपादाब्ज यत्प्रसादात् | २ |
| वन्देऽहं विश्वकर्तारं विश्वप | ३ |
| वपुर्विषमसंस्थानं कर्णज्वरकरो रव | ४२ |
| वर भागीरथीतीरे नीरिचोदर | ३० |
| वरमश्रीकता लोके नासमान | ७८ |
| वसन्त्यरण्येषु चरन्ति दूर्वां | ५५ |
| वागर्थाविव सम्पृक्तौ वागर्थ | ३३ |
| वालोल्लासितकल्लोलं | ८७ |
| विदेशेषु धन विद्या व्यसनेषु | १२० |
| विधिना तुलितावेतौ सेकेन्दरपरन्दरौ | १८ |
| विपरीते विधौ सर्वे वैपरी | १४३ |
| विश्रामशशका मन्ति सर्वत्र | ६५ |
| विषकुम्भसहस्रेण गर्भे | ५६ |

| श्लोकाद्यांश | श्लोकाङ्क |
|---|---|
| वैकल्य धरणीपातमयथोचित | ११२ |
| वैद्यराज नमस्तुभ्यं त्वं यमजेष्ठ | ९६ |
| व्यजनैरातपत्रैश्च भूत्वा विच्छै | ५५ |
| **( श )** | |
| शकराद्यत्रयोगेन निम्बबीज प्रतिष्ठितम् | ७१ |
| शिरसा धार्य्यमाणोऽपि | १०९ |
| शिशिरकिरणधारी शैलबालाविहारी | २१ |
| शिशु प्रविशत प्राथ | ९५ |
| शुभवासनया चेतो महत्या जायते | १४० |
| शुश्रायणी यदि स्नाता मेधया | १५५ |
| श्रीनन्दनधनानन्द यशोदानन्दकन्दकम् | १५ |
| **( ष )** | |
| षष्ठीतत्पुरुष रामो बहुव्रीहि | ३४ |
| **( स )** | |
| सत्य सत्यं मनोवाक्य नादत्तमुपतिष्ठते | १२२ |
| सदाऽमन्दमदस्यन्दिमातङ्गपिशिताशन | ६० |
| सद्विद्या यदि का चिन्ता वराकोदरपूरणे | १३२ |
| सर्व्वेषामपि वृक्षाणां कार्य्यज्ञो वैतसद्रुम | ८१ |
| सविप्रपादोदककर्द्दमानि | ११९ |
| सारगर्भैरकुटिलैरच्छिद्रै | ३७ |
| सुमहत् फलवैषम्यं कर्म्मणामिह | १४१ |
| सुरत्राण सुरम्यस्य किं पलाशेन | ८० |
| सुवर्ण बहु यस्यास्ति तस्य | १२३ |
| सूर्यश्चन्द्रो घनो वृक्षो नदी | १२७ |
| सौकिनोऽस्तिमायाति सौकिनाया | १५२ |
| सती सीदन्ति गात्राणि दृष्टे | ९१ |
| स्वयं पञ्चमुख पुत्रौ गजाननषडाननौ | २७ |
| स्वय सुरेश श्वशुरो नगेश | २५ |
| **( ह )** | |
| हस श्वेतो बक श्वेत को भेदो | ६१ |
| हा हैम कि न तवैव विदीर्ण हृदयोदरे | ८ |
| हृदयान्नापयातोऽसि दिक्षु सर्वासु | १२९ |


---

# उद्भट-सागरः

## प्रथम-प्रवाहः ।

### ग्रन्थारम्भः ।

( १ )

धन्यं भारतभूतलं प्रियतम सारस्वत मन्दिर
धन्या संस्कृतवाक् सुधापरतरा गीर्वाणसंसेविता ।
धन्या ब्राह्मणपण्डिता सुकवितापाण्डित्यसमण्डिता
स्तेषामुद्भटभाषितं क्षितितले जीयात् समा शाश्वती ॥

( उद्भटसागरस्य )

( २ )

वन्दे भूदेवपादाब्जं यत्प्रसादादयं नवम् ।
उद्भटश्लोकपीयूषं पिबन्तु भुवि मानवा. ॥

( उद्भटसागरस्य )

---

नो चेत् कथं कमलपत्रविशालनेत्रो
नारायणः स्वपिति पन्नगभोगतल्पे ॥

## लक्ष्मी-लीला ।

( १२ )

धन्ये लक्ष्मि त्वया सार्द्धं समुद्राद् धूलिरुत्थिता ।
पश्यन्तोऽपि न पश्यन्ति श्रीमन्तो धूलिलोचनाः ॥

## रामचन्द्रः ।

( १३ )

रसना तिरस्कुर्वन् रामनामोत्कर्षं सूचयति —

रसने त्वं रसज्ञेति वृथैव स्तूयसे बुधैः ।
अपारमाधुरीधामरामनामपराङ्मुखी ॥

## सीता ।

( १४ )

मातापितृभ्यां कन्याया यन्नाम क्रियते नहि ।
रामेण सह तन्नाम समास्येऽस्तु निरन्तरम् ॥
( उद्भटसागरस्य )

कृष्णः ।

( १५ )

श्रीनन्दनयनानन्दं यशोदानन्दकन्दुकम् ।
गोगोपगोपिकागोप राधानाथं नमाम्यहम् ॥

( उद्भटसागरस्य

( १६ )

श्रीकृष्णभक्तस्य पुनर्जन्म न भवतीत्याह —

गोपाल इति मत्वा त्वां प्रचुरक्षीरवाञ्छया ।
श्रितो मातुः स्तनक्षीरमपि लब्धुं न शक्नुयात् ॥

( १७ )

दासोऽहमिति मे बुद्धिश्चिरमासीद् व्रजेश्वरे ।
दाकारोऽपहृतस्तेन गोपीवस्त्रापहारिणा ॥

( १८ )

कश्चिद् भक्तो भगवति कृष्णे चित्तमावेशयितुं वाग्वैचित्र्यमवलम्ब्य भगवन्तं प्रार्थयते —

रत्नाकरस्तव गृहं गृहिणी च पद्मा
किं देयमस्ति भवते जगदीश्वराय ।
आभीरवामनयनाहृतमानसाय
दत्तं मनो यदुपते कृपया गृहाण ॥

ापि भिचां कुरुते महेशो

ललाटवह्निरयमेव शेषः ॥

( २६क )

अमानिमथ खलु ससारभाव सर्व्वानेवाभिभवतीति दर्शयितुं तदवस्थ ि व वर्णयति —

एका भार्य्या समररसिका निम्नगा च द्वितोया

पुत्रोऽप्येको द्विरदवदनः षण्मुखश्च द्वितीयः ।

नन्दी भृङ्गी च कपिवदनो वाहनं पुङ्गवेशः

स्मारं स्मारं स्वगृहचरितं भस्मदेहो महेशः ॥

---

## पार्वती ।

( २७ )

स्वयं पञ्चमुखः पुत्रौ गजाननषडाननौ ।

दिगम्बरः कथं जीवेदन्नपूर्णा न चेद् गृहे ॥

( २८ )

यत्रास्ति भोगो न च तत्र मोक्षो

यत्रास्ति मोक्षो न च तत्र भोगः ।

उमापदाम्भोजयुगार्चने तु

भोगश्च मोक्षश्च करस्थ एव ॥

---

## गङ्गा ।

( २८ )

जठरवसतिकाले कीदृशी यन्त्रणा स्यात्
सकृदपि मनसि खे जह्नुजे चिन्तय त्वम् ।
जठरवसतिनाशे साभिलाषो जनन्या-
स्तव जठरनिवासं याचते पूर्णचन्द्रः ॥

( उद्भटसागरस्य )

( ३० )

वरं भागीरथीतीरे नीरेणोदरपूरणम् ।
तत्र चेल्लभ्यते शाकः कः काकः पाकशासनः ॥

( ३१ )

यदा यदा यान्ति नरा हि जाह्नवीं
हरन्ति पापानि वदन्ति साप्रियम् ।
अरे कृतघ्ना नितरा नराधमाः
स्वयंसमुत्पाद्य निहन्तुमुद्यताः ॥

( ३२ )

कालीघट्टे गङ्गा कथं सङ्कुचितेत्याह —

कालीघट्टे कलौ काले किल्बिषौघनिकृन्तने ।
सपत्नीविभवं दृष्ट्वा गङ्गाऽभूद् मलिना कृशा ॥

( राजकुमार न्यायरत्नस्य )

## सूक्ति-समष्टिः ।

### हरगौरी-मूर्त्तिः ।

( ३३ )

वागर्थाविव संयुक्तौ वागर्थप्रतिपत्तये ।
जगतो जनकौ वन्दे शर्व्वाणीशशिशेखरौ ॥

( क्षेमेन्द्रस्य )

---

### शिवराम-मूर्त्तिः ।

( ३४ )

सेतुबन्धे रामेश्वरमूर्त्तिस्थापनात् परं नारदेन रामेश्वरशब्दे कः समास इति राम शिवो ब्रह्मा च पृष्ट । तत्रोत्तराणि —

षष्ठीतत्पुरुषं रामो बहुव्रीहिं महेश्वरः ।
रामेश्वरपदे ब्रह्मा कर्म्मधारयमब्रवीत् ॥

---

## जीव-तरङ्गः

### राजा ।

( ३५ )

राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् ।
राजा पिता च माता च सर्व्वेषां न्यायवर्त्तिनाम् ॥

## कृष्णचन्द्रः ।

( ४० )

नवद्वीपाधिपतिं महाराज-कृष्णचन्द्रं प्रति कवेरुक्तिरियम् —

निष्कलङ्को निरातङ्कः पद्मिनीप्राणवल्लभः ।
चतुःषष्टिकलो भाति कृष्णचन्द्रः सदा भुवि ॥

( भारतचन्द्र-रायगुणाकरस्य )

---

## अश्वः ।

( ४१ )

हरिणशिशौ शीघ्रगामित्वं पराभवितुं तत्पश्चाद्धावमानं घोटकं प्रत्युक्तिरियम् ·

अयि तुरङ्ग कुरङ्गशिशोर्जवं
जयसि चेदिह किं तव पौरुषम् ।
यदि विधात्वशेन मनागपि
स्खलसि विश्वविसारियशःक्षतिः ॥

---

## उष्ट्रः ।

( ४२ )

असाधारण एकोऽपि गुणः सर्व्वान् दोषानाच्छादयतीत्याह :—

वपुर्विषमसंस्थानं कर्णज्वरकरो रवः ।
करभस्याशुगत्यैव च्छादिता दोषसंहतिः ॥

( भट्टभल्लटस्य )

---

## काकः ।

( ४३ )

गुणवतां समक्षे निर्गुणानामसङ्कोचव्यवहारो दोषायेत्याह —

अहो मोहो वराकस्य काकस्य यदसौ पुरः ।
सरीसर्त्ति नरीनर्त्ति शिखण्डिराजहंसयोः ॥

( ४४ )

तुल्यवर्णच्छदः कृष्णः कोकिलैः सह सङ्गतः ।
केन विज्ञायते काकः स्वयं यदि न भाषते ॥

---

## काक-कोकिलौ ।

( ४५ )

मूर्खपण्डितयोराकृतिसाम्येऽपि गुण एव तयोर्भेदं जनयतीत्याह —

अहं पिको भवान् काकः समानः कालिमावयोः ।
प्रभेदं कथयिष्यन्ति काकलीकोविदाः पुनः ॥

---

## कोकिलः ।

( ४६ )

सदैव यस्य संसर्गं कुर्वन्ति तस्य विशेषगुणवत्त्वं न हि सर्वे जानन्तीत्याह —

रसालशिखरासीनाः शतं सन्तु पतत्त्रिणः ।
तन्मञ्जरीरसास्वादं जानन्त्येव कुहूमुखाः ॥

---

## खद्योतः ।

( ४७ )

यस्य यादृक् सामर्थ्यं तस्य तदनुसरणमेव श्रेय इत्याह .—

ज्योतिरिङ्गण कथं न लज्जसे
यत्तमः शमयितुं समीहसे ।
एतदेव बहु किं न मन्यसे
यत् त्वमत्र तिमिरेषु लक्ष्यसे ॥

---

## गर्दभः ।

( ४८ )

कण्ठदोषो हि गुणवन्तमपि दूषयतीत्याह —

खरोऽपि प्रचुरं भारं नित्यं वहति दूरतः ।
खरस्वरतया त्वेष नहि स्पृश्योऽश्वैरपि ॥

---

## चातकः ।

( ४९ )

मानभङ्गात् प्राणनाशोऽपि वरमित्याह .—

एक एव खगो मानी चिरं जीवतु चातकः ।
पुरन्दरं प्रार्थयते म्रियते वा पिपासया ॥

---

## धेनुः ।

( ५० )

तृणानि शुष्काणि वने चरित्वा
पीत्वापि तोयान्यमृतं स्रवन्ति ।
यद्गोमयाद्याश्च पुनन्ति लोकान्
गोभिर्न तुल्यं धनमस्ति किञ्चित् ॥

---

## भेकः ।

( ५१ )

तावद् गर्जति मण्डूकः कूपमाश्रित्य निर्भयः
यावत् करिकराकारः कृष्णसर्पो न दृश्यते ॥

---

## भ्रमरः ।

( ५२ )

यत्र यस्य विशेषनैपुण्यमस्ति तस्य गुणदोषविवेचने तस्यैवाधिकारो नान्यस्येत्याह —

दलानाञ्च फलानाञ्च सन्तु ते ते विवेकिनः ॥
मकरन्दविशेषज्ञो विना भृङ्गमिहास्ति कः ॥

---

## मत्स्यरङ्कः ।

( ५३ )

क्वी —

मत्स्यरङ्क निरातङ्को लवणाम्भसि मज्जसि ।
इयं हि जाठरी ज्वाला व्याकुलीकुरुते न कम् ॥

---

## मयूरः ।

( ५४ )

ये च परोपकारी व्रतमिति गणयन्ति, ते नूनं यत्र तत्र स्थिता अपि तत्पालयन्तीत्याह —

व्यजनैरातपत्रैश्च भूत्वा पिच्छैः कलापिनाम् ।
क्रियतेऽपि पदभ्रष्टैः परेषां तापवारणम् ॥

---

## मृगः ।

( ५५ )

वसन्त्यरण्येषु तृणं चरन्ति
पिबन्ति तोयान्यपरिग्रहाणि ।
तथापि वध्या हरिणा नराणां
को लोकमाराधयितुं समर्थः ॥

( मुक्तापीडस्य )

---

## वृश्चिकः ।

( ५६ )

विषकुम्भसहस्रेण गर्वं नाप्नोति वासुकिः ।
वृश्चिको बिन्दुमात्रेण वहत्यूर्ध्वं स्वकण्टकम् ॥

---

## शफरी ।

( ५७ )

वल्पैरपि वित्तविद्यादिभिरात्मश्लाघिजनम् प्रत्युक्तिरियम् :—

अगाधजलसञ्चारी विकारी नापि रोहितः ।
गण्डूषजलमात्रेण शफरी फर्फरायते ॥

---

## शुकः ।

( ५८ )

अखिलेषु विहङ्गेषु हन्त स्वच्छन्दचारिषु ।
शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥

---

## सर्पः ( अनन्तः ) ।

( ५९ )

बहवः फणिनः सन्ति भेकभक्षणदक्षकाः ।
स एक एव शेषो हि धरणीधरणक्षमः ॥

( वैद्यभानुपण्डितस्य )

---

## सिंहः ।

( ६० )

महान्त कदापि स्वभावान्न स्खलन्तीत्याह —

सदाऽमन्दमदस्यन्दिमातङ्गपिशिताशनः ।
अलब्धाभीष्टभक्ष्योऽपि तृणान्यत्ति न केशरी ॥

---

## हंसः ।

( ६१ )

पूर्वमुत्तमं संसेव्य पश्चाद् दैववशाद् अधमसेविनं प्रत्युक्तिरियम् —

कंसारिचरणोद्भूतसिन्धुकल्लोललालितम् ।
मन्ये हंस मनो नीरे कुल्यानां रमते न ते ॥

( शार्ङ्गधरस्य )

( ६२ )

उत्तमाधमयोः प्रभेदः कर्मणैव प्रतीयते इत्याह —

हंसः श्वेतो बकः श्वेतः को भेदो बकहंसयोः ।
नीरक्षीरविभागे तु हंसो हंसो बको बकः ॥

---

# उद्भित्-तरङ्गः ।

## सामान्य-वृक्षः ।

( ६३ )

छायामन्यस्य कुर्व्वन्ति तिष्ठन्ति स्वयमातपे ।
फलन्ति च परार्थाय वृक्षाः साधुजना इव ॥

( ६४ )

बहुसम्पद सहृदया येन केनापि पराभीष्ट पूरयन्तीत्याह —

पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ।
धन्या महीरुहा येभ्यो विमुखा यान्ति नार्थिनः ॥

( ६५ )

गृहमागतानां क्षुद्राणां सत्कार कथञ्चित् सुकर महतान्तु दुष्कर एवेत्याह —

विश्रान्तश्रमकाः सन्ति सर्व्वत्र बहुपादपाः ।
स एव विरलो वृक्षो यत्र श्राम्यति कुञ्जरः ॥

---

## अर्कः ।

( ६६ )

। कोऽपि सर्व्वांस्तोषयितु न पारयतीत्याह —

त्वयि वर्षति जीमूत सर्व्वे पल्लविता द्रुमाः ।
अस्माकमर्कवृक्षाणां पूर्व्वपत्रञ्च नश्यति ॥

---

## अश्वत्थः ।

( ६७ )

रोपितैः सेवितैः किं तैः सत्यश्वत्थेऽन्यपादपैः ।
वर्धितो नरकाद् रक्षेत् स्पृष्टोऽरिष्टानि हन्ति यः ॥

( मागधसाधवस्य

## इक्षुः ।

( ६८ )

कान्तोऽसि नित्यमधुरोऽसि रसाकुलोऽसि
किञ्चासि मानवमनःसुखदः सदैव ।
इक्षो तवास्ति सकलं परमेकमूनं
यत् सेवितो मधुरतां त्यजसि क्रमेण ॥

## कल्पतरुः ।

( ६९ )

कस्यचित् दातुः समीपादभीष्टफलनाभे विलम्बमसहमानस्योक्तिरियम् —

कल्पवृक्षोऽपि कालेन भवेद् यदि फलप्रदः ।
को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः ॥

## कार्पासः ।

( ७० )

नीरसान्यपि रोचन्ते कार्पासानां फलानि नः ।
येषां गुणमयं जन्म परेषां गुह्यगुप्तये ॥

## केतकी ।

( ७१ )

केतकीकुसुमं भृङ्गः खिन्नगात्रोऽपि सेवते ।
दोषः करोति किं नाम गुणापहृतचेतसाम् ॥

## चन्दनः ।

( ७२ )

विपुलविभवमपि दानवर्जित प्रयुक्तिरियम् —

मूलं भुजङ्गैः शिखरं प्लवङ्गैः
शाखा विहङ्गैः कुसुमञ्च भृङ्गैः ।
श्रितं सदा चन्दनपादपस्य
परोपकाराय सतां विभूतिः ॥

## तालः ।

( ७३ )

उच्चैस्तरोऽपि विटपी भुवि तालसंज्ञो
मार्त्तण्डचण्डकिरणैरतितप्तमूलः ।

योग्यः कथं भवति तापकलापशान्त्यै
लोकस्य शोकसहितस्य तृषातुरस्य ॥

---

## दूर्वा ।

( ७४ )

अत्र सारवत्ता क्षुद्रमपि न जहातीत्याह —

निष्पिष्टापि पदाघातैः खरतापैश्च तापिता ।
अजाद्यैश्चर्विताप्येषा न दूर्वा म्रियते क्वचित् ॥

---

## द्राक्षा ।

( ७५ )

दासेरकस्य दासीयं बदरी यदि रोचते ।
एतावतैव किं द्राक्षा न साक्षादमृतप्रदा ॥
( कर्पूरस्य )

---

## नारिकेलः ।

( ७६ )

उपकर्तुः प्रत्युपकृति सतां स्वाभाविकीत्याह :—

प्रथमवयसि पादे तोयमल्पं स्मरन्तः
शिरसि निहितभारा नारिकेरा नराणाम् ।

दददति परममिष्टं तोयमाजीवनान्तं
नहि कृतमुपकारं साधवो विस्मरन्ति ॥

## निम्बः ।

( ७७ )

स्वभावो दुष्परिहर इत्याह —

शर्कराघृतयोगेन निम्बबीजं प्रतिष्ठितम् ।
अपि क्षीरसदासेकैर्निम्बः किं मधुरायते ॥

## पद्मम् ।

( ७८ )

यथाकथमपि नीचसाम्य न स्पृहणीयमित्याह —

वरमग्रीकृता लोके नासमानसमानता ।
इतीव कुमुदोद्भेदे कमलं मुकुलायते ॥

## पनसः ।

( ७९ )

अस्ति चेत् पानसं बीजं व्यञ्जनैः किं प्रयोजनम् ।
नास्ति चेत् पानसं बीजं व्यञ्जनैः किं प्रयोजनम् ॥

पलाशः ।

( ८० )

सुरक्तेन सुरम्येण किं पलाशेन पक्षिणाम् ।
यस्य पुष्पे न सौरभ्यं फले न मधुरो रसः ॥

वेतसः ।

( ८१ )

सर्व्वेषामपि वृक्षाणां कार्य्यज्ञो वेतसद्रुमः ।
नम्रीभूयाऽवति प्राणान् नदीपूररिपूदये ॥

शालिः ।

( ८२ )

तुल्यरूपाण्यपि वस्तूनि गुणविशेषादन्यथात्वाद् भिद्यन्ते इत्याह :—

एकभूरुहयोरेकदलयोरेककाण्डयोः ।
शालिश्यामाकयोर्भेदः फलेन परिचीयते ॥

सहकारः ।

( ८३ )

दिङ्मण्डलं परिमलैः सुरभीकरोषि
सौन्दर्य्यमावहसि लोचनलोभनीयम् ।
हंहो रसाल फलवर्य्य तथापि दूये
यद् ग्रन्थिनं स्वहृदयं कठिनं बिभर्षि ॥

# स्वभावोक्ति-तरङ्गः ।

## पर्वतः ( मलयः )

( ८४ )

यो हि आश्रितानां सर्वथा हितं साधयति स एव गरीयानित्याह —

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्राश्रिता हि तरवस्तरवस्त एव ।
मन्यामहे मलयमेव यदाश्रयेण
शाखोटनिम्बकुटजा अपि चन्दनाः स्युः ॥

---

## सागरः ।

( ८५ )

निर्लज्जो हि मुहुस्तिरस्कृतोऽपि स्वभावं न जहातीत्याह —

मन्थितो लङ्घितो बद्धः पीतो यद्यपि सागरः ।
गर्जत्युच्चैस्तथाप्येष जडात्मानो हि निस्त्रपाः ॥

( ८६ )

पात्रापात्रे अविचार्य्य आदरानादरौ न युक्तौ इत्याह —

अधःकरोषि यद् रत्नं मूर्ध्नि धारयसे तृणम् ।
दोषस्तवैव जलधे रत्नं रत्नं तृणं तृणम् ॥

( ८७ )

यस्य यद् वस्तु परार्थे न साधयति तेन स्पर्द्धमानः स निन्द्यते इत्याह —

वातोल्लासितकल्लोलं धिक् ते सागर गर्जितम् ।
यस्य तीरे तृषाक्रान्तः पान्थः पृच्छति कूपिकाम् ॥

---

## सुवर्णम् ।

( ८८ )

हा हेम किं न तत्रैव विलीनं दहनोदरे ।
पाषाणशकलाधीनं यत् ते गुणपरीक्षणम् ॥

( ८९ )

महान्तः कष्टसहस्राण्यपि सोढुं शक्नुवन्ति नीचससर्गस्तु तेषामसह्य एवेत्याह —

न दुःखं दहने घर्षे छेदने ताडनेऽपि मे ।
एवं मे विषमं दुःखं गुञ्जया सह तोलने ॥

( अमरुकस्य )

# निन्दा-प्रशंसा-तरङ्गः ।

## (क) निन्दा-तरङ्गः ।

### अप्रवास-निन्दा ।

( ८० )

यो न भ्रमति देशेषु न च संसेवते बुधान् ।
तस्य सङ्कुचिता बुद्धिर्घृतबिन्दुरिवाम्भसि ॥

---

### असन्तोष-निन्दा ।

( ८१ )

आशाया असीमत्वं दर्शयति :—

गिरिर्महान् गिरेरब्धिर्महानब्धेर्नभो महत् ।
नभसोऽपि महत् ब्रह्म ततस्तृष्णा महीयसी ॥

---

### उदर-निन्दा ।

( ८२ )

किमकारि न कार्पण्यं कस्यालङ्घि न देहली ।
अस्य दग्धोदरस्यार्थे किमनाटि न नाटकम् ॥

---

## ऋण-निन्दा ।

( ८३ )

स्मृते सीदन्ति गात्राणि दृष्टे प्रज्ञा विनश्यति ।
यस्मिंस्तद्विषमत्युग्रम् उत्तमर्णाभिशब्दितम् ॥

---

## कुकवि-निन्दा ।

( ८४ ).

कूटकाव्यरचनापक्षपातिनः कवेरुक्तिरियम् ।—

किं काव्येन कवेस्तेन किं काण्डेन च धन्विनः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥

( त्रिविक्रमभट्टस्य )

---

## कुपुत्र-निन्दा ।

( ८५ )

शिशुं प्रविशतः प्रायः प्रतिवेशिगुणागुणौ ।
गन्धोऽन्यसन्निधेरेव संक्रामति समीरणे ॥

( हरिहरस्य )

---

## कुवैद्य-निन्दा ।

( ८६ )

वैद्यराज नमस्तुभ्यं त्वं यमज्येष्ठसोदरः ।
यमः संहरते प्राणान् त्वन्तु प्राणान् धनानि च ॥

---

## कुसंसर्ग-निन्दा

( ९७ )

लघुना सङ्गतो लोको लघुतामेति निश्चितम् ।
पश्य तुम्बीफलालम्बी लौहोऽपि प्लवते जले ॥

---

## कृतघ्न-निन्दा ।

( ९८ )

न भाराः पर्व्वता भारा न भाराः सप्त सागराः ।
निन्दका हि महाभारास्तथा विश्वासघातकाः ॥

---

## कृपण-निन्दा ।

( ९९ )

उपभोक्तुं न जानाति कदापि कृपणो जनः ।
प्राकण्ठजलमग्नोऽपि कुक्कुरो लेढि जिह्वया ॥

---

## खल-निन्दा ।

( १०० )

अपूर्वा दृश्यते व्याली खलाननविलाश्रया ।
कर्णमूले दशत्येकं हरत्यन्यस्य जीवितम् ॥

---

## गृहविशेष-निन्दा ।

( १०१ )

न विप्रपादोदकपङ्किलानि
न वेदपाठध्वनिगर्ज्जितानि ।
स्वाहास्वधाकारविवर्ज्जितानि
श्मशानतुल्यानि गृहाणि तानि ॥

---

## दारिद्र्य-निन्दा ।

( १०२ )

एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोरिति यो बभाषे ।
नूनं न दृष्टं कविनापि तेन
दारिद्र्यदोषो गुणराशिनाशी ॥

( १०३ )

मृता मम त्रयो दारा विद्याबुद्धिविभूतयः ।
चतुर्थी दुर्गतिः साध्वी मुञ्चन्तं मां न मुञ्चति ॥

( १०४ )

शीतवस्त्रं प्रार्थयमानस्य भिक्षुकस्य सूक्तिरियम् :—

रात्रौ जानु दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः ।
इत्थं शीतं मया नीतं जानुभानुकृशानुभिः ॥

( जयन्तीदेव्याः )

## दुर्जन-निन्दा ।

( १०५ )

ग्रीष्मकाले दिनं दीर्घं शीतकाले तु शर्व्वरी ।
परोपतापिनः सर्व्वे प्रायशो दीर्घजीविनः ॥

( प्रेमचन्द्रतर्कवागीशस्य )

( १०६ )

भुजङ्गानां विषं दन्ते मक्षिकाणाञ्च मस्तके ।
वृश्चिकानां तथा पुच्छे सर्व्वाङ्गेषु दुरात्मनाम् ॥

---

## धनि-निन्दा ।

( १०७ )

भक्ते द्वेषो जड़े प्रीतिररुचिर्गुरुलङ्घनम् ।
मुखे च कटुता नित्यं धनिनां ज्वरिणामिव ॥

( आनन्दवर्द्धनस्य )

---

## निर्गुण-निन्दा ।

( १०८ )

एकमेव पुरस्कृत्य दश जीवन्ति निर्गुणाः ।
विना तेन न शोभन्ते संख्याङ्केष्विव विन्दवः ॥

## परगृहवास-निन्दा ।

( १०९ )

शिरसा धार्य्यमाणोऽपि सोमः सौम्येन शम्भुना ।
कृशत्वं परमं धत्ते कष्टः खलु पराश्रयः ॥

---

## भिक्षुक-निन्दा ।

( ११० )

काकेनाह्वयते काको भिक्षुणा न तु भिक्षुकः ।
काकभिक्षुकयोर्मध्ये वरं काको न भिक्षुकः ॥

( १११ )

तृणादपि लघुस्तूलस्तूलादपि च याचकः ।
वायुना नीयते नासौ स्वतः प्रार्थनशङ्कया ॥

---

## मद्यपान-निन्दा ।

( ११२ )

वैकल्यं धरणीपातमयथोचितजल्पनम् ।
सन्निपातस्य चिह्नानि मद्यं सर्व्वाणि दर्शयेत् ॥

( भल्लट

---

## (ख) प्रशंसा-तरङ्गः ।

### उद्भट-कविता-प्रशंसा ।

( ११३ )

द्राक्षा म्लानमुखी जाता शर्करा चाश्मतां गता ।
उद्भटस्य रसस्याग्रे सुधा भीता दिवं गता ॥

( ११४ )

भाषासु मधुरा मुख्या दिव्या गीर्वाणभारती ।
तत्र सुमधुरं काव्यमुद्भटस्तु ततोऽपि च ॥

---

### कवि प्रशंसा ।

( ११५ )

धन्याः कवीश्वरास्ते हि रससागरपारगाः ।
नास्ति येषां यशःकाये जरामरणजं भयम्

---

### काव्य-प्रशंसा ।

( ११६ )

जलमन्नं तथा काव्यं त्रीणि रत्नानि भूतले
मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते

---

## गुण-प्रशंसा ।

(११७)

गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः ।
वसुदेवं परित्यज्य वासुदेव उपास्यते ॥

(११८)

ज्येष्ठत्वं जन्मना नैव गुणैर्ज्येष्ठत्वमुच्यते ।
गुणाद् गुरुत्वमायाति दुग्धं दधि घृतं क्रमात् ॥

---

## गृहविशेष-प्रशंसा ।

(११९)

सविप्रपादोदककर्दमानि
सवेदपाठध्वनिगर्ज्जितानि ।
स्वाहास्वधाकारनिरन्तराणि
स्वर्गेण तुल्यानि गृहाणि तानि ॥

---

## चरित्र-प्रशंसा ।

(१२०)

विदेशेषु धनं विद्या व्यसनेषु धनं मतिः ।
परलोके धनं धर्मः शीलं सर्व्वत्र वै धनम् ॥

---

## दान-प्रशंसा ।

( १२१ )

भवन्ति नरकाः पापात् पापं दारिद्र्यसम्भवम् ।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥

( १२२ )

सत्यं सत्यं मनोर्वाक्यं नादत्तमुपतिष्ठते ।
अम्बुभिः पूरिता पृथ्वी चातकस्य मरुस्थली ॥

## धनि-प्रशंसा ।

( १२३ )

धनमदमत्तं प्रति कस्यचित् कवेः सत्तिरियम् —

सुवर्णं बहु यस्यास्ति तस्य न स्यात् कथं मदः ।
नामसाम्यादहो यस्य धुस्तूरोऽपि मदप्रदः ॥

## नारी-प्रशंसा ।

( १२४ )

गृही चेत् समवाप्नोति गृहिणी हृदयङ्गमाम् ।
सारं पश्यति संसारं न तु भारं कदाचन ॥
( नीलकण्ठस्य )

## पण्डित-प्रशंसा ।

( १२५ )

अज्ञानदूरीकरणाय ज्ञानवन्तमाश्रयेदित्याह :—

उद्यन्तु शतमादित्या उद्यन्तु शतमिन्दवः ।
न विना विदुषां वाक्यैर्नश्यत्याभ्यन्तरं तमः ॥

( भट्टमल्लस्य )

( १२६ )

महान्तो हि अन्येषां गुणमाकर्ण्य सर्वत्र प्रशंसन्ति दोषन्तु निगूहन्तीत्याह —

गुणदोषौ गुणी गृह्णन्निन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥

( भिन्दुकस्य )

---

## परोपकार-प्रशंसा ।

( १२७ )

सूर्यश्चन्द्रो घनो वृक्षो नदी धेनुश्च सज्जनः ।
एते परोपकाराय विधात्रैव विनिर्म्मिताः ॥

---

## पुत्त्र-प्रशंसा ।

( १२८ )

दिग्वाससं गतव्रीडं जटिलं धूलिधूसरम् ।
पुण्यवन्तो हि पश्यन्ति महादेवमिवात्मजम् ॥

---

## प्रवास-प्रशंसा ।

( १२९ )

यो हि भ्रमति देशेषु सेवते च सुपण्डितान् ।
तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि ॥

## महत्त्व-प्रशंसा ।

( १३० )

अधो गत्वा स्वयं क्षुद्रा उत्थाप्यन्ते महात्मना ।
जलेन नीयते तैलमूर्द्धं संमिश्रणात् परम् ॥

## मित्र-प्रशंसा ।

( १३१ )

करोतु तादृशीं प्रीतिं यादृशी नीरपङ्कयोः ।
रविणा शोषिते नीरे पङ्कदेहो विदीर्य्यति ॥

## विद्या-प्रशंसा ।

( १३२ )

सद्विद्या यदि का चिन्ता वराकोदरपूरणे ।
शुकोऽप्यशनमाप्नोति रामरामेति च ब्रुवन् ॥

## वीर-प्रशंसा ।

( १३३ )

एकचक्रो रथो यन्ता विकलो विषमा हयाः ।
आक्रामत्येव तेजस्वी तथाप्यर्को नभस्तलम् ॥

---

## सन्तोष-प्रशंसा ।

( १३४ )

कर्त्तव्यपरायणा हि कर्त्तव्यपालने कथमपि न पराङ्मुखीभवन्तीत्याह —

उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् ।
विरक्तस्य तृणं भार्या निस्पृहस्य तृणं जगत् ॥

---

## सहाय-प्रशंसा ।

( १३५ )

सर्व्वगुणसम्पन्नोऽपि सहाय विना नोत्कर्षं लभते इत्याह —

गुणैः सर्व्वज्ञकल्पोऽपि सीदत्येको निराश्रयः ।
अनर्घमपि माणिक्यं हेमाश्रयमपेक्षते ॥

---

## सुजन-प्रशंसा ।

( १३६ )

निसर्गेण विशुद्धात्मा सुजनो व्यजनोपमः ।
परसन्तापनाशार्थं परिभ्रमति सर्व्वदा ॥

---

## सुपुत्त-प्रशंसा ।

( १३७ )

निर्गुणबहुपेक्षया गुणवदेकोऽपि श्लाघ्य इत्याह —

एकेनापि सुपुत्त्रेण सिंही स्वपिति निर्भयम् ।
सहैव दशभिः पुत्त्रैर्भारं वहति गर्द्दभी ॥

---

## सुसंसर्ग-प्रशंसा ।

( १३८ )

चन्दनं शीतलं लोके चन्दनादपि चन्द्रमाः ।
ताभ्यां चन्दनचन्द्राभ्यां शीतलः साधुसंगमः ॥

---

## रस-तरङ्गः ।

### (क) करुण-रसः ।

( १३९ )

हृदयान्नापयातोऽसि दिक्षु सर्व्वासु दृश्यसे ।
वत्स राम गतोऽसीति सन्तापेनाऽनुमीयते ॥

---

## (ख) शान्त-रसः ।

### उपदेशः ।

( १४० )

शुभवासनया चेतो महत्या जायते महत् ।
आत्मानं चिन्तयन् रुद्र नन्दी रुद्रत्वमागतः ॥

---

### कर्म्म-फलम् ।

( १४१ )

सुमहत् फलवैषम्य कर्म्मणामिह दृश्यते ।
वहन्ति शिविका केचिदारोहन्त्यपरे सुखम् ॥

---

### काल-चरितम् ।

( १४२ )

प्लवन्ते प्रस्तरा नीरे मानुषा घ्नन्ति राक्षसान् ।
कपयः कर्म्म कुर्व्वन्ति कालस्य कुटिला गतिः ॥

---

### दैव-बलम् ।

( १४३ )

विपरीते विधौ सर्व्वं वैपरीत्याय कल्पते ।
दग्धशम्बूकचूर्णानि दह्यन्ते सलिलैरपि ॥

( १४४ )

न केवलं मनुष्येषु दैवं देवेष्वपि प्रभु ।
धनदेऽपि स्थिते मित्रे चर्माम्बरधरो हरः ॥
( रविगुप्तस्य )

---

## विवेकः ।

( १४५ )

मृत्योर्बिभेषि किं मूढ भीत मुञ्चति नो यम ।
अजातं नैव गृह्णाति कुरु यत्नमजन्मनि ॥

---

## विषय-भोग-दूषणम् ।

( १४६ )

विषयासक्तिर्मृत्युचिन्तां विस्मारयतीत्याह —

करिष्यामि करिष्यामि करिष्यामीति चिन्तया ।
मरिष्यामि मरिष्यामि मरिष्यामीति विस्मृतम् ॥

( १४७ )

मातापितृमयो बाल्ये यौवने दयितामयः ।
वृद्धेऽपत्यमयो मूढो हरस्य नाममयः क्वचित् ॥

---

## वैराग्यम् ।

( १४८ )

मरणजीवनयोर्जीवनमेव विचित्रमित्याह—

उद्घाटितनवद्वारे पञ्जरेऽसुविहङ्गमः ।
यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः ।

---

## (ग) हास्य-रसः ।

( १४९ )

कमले कमला शेते हरः शेते हिमालये ।
क्षीराब्धौ च हरिः शेते मन्ये मत्कुणशङ्कया ॥

---

## विविध-तरङ्गः ।

### आय-व्ययौ ।

( १५० )

आयं व्ययं च मध्यस्था व्ययमेव सुहृज्जनाः ।
ज्ञातयः प्रथमायेन पश्यन्त्यायं न तु व्ययम् ।

---

## कस्तूरी ।

( १५१ )

अयि त्यक्तासि कस्तूरि पामरैः पङ्कशङ्कया ।
खेदेनालं महीपालाः किं न सन्ति महीतले ॥

## तुला-दण्डः ।

( १५२ )

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥

## दारिद्र्य-विमोचनोपायः ।

( १५३ )

जिता धनवता दारा जिता बलवता सभा ।
अभ्यागतो जितो गोभिर्दारिद्र्यं कृषिभिर्जितम् ।

## विद्याधनोपार्ज्जनम् ।

( १५४ )

स्वल्पमपि हितकरं नोपेक्षेत यस्मात् —

क्षणशः कणशश्चैव विद्यामर्थञ्च सञ्चयेत् ।
क्षणत्यागे कुतो विद्या कणत्यागे कुतो धनम् ॥

## श्रद्धा-यत्नौ ।

( १५५ )

श्रद्धा यत्नौ यदि स्यातां मेधया किं प्रयोजनम् ।
तावुभौ यदि न स्यातां मेधया किं प्रयोजनम् ॥

---

## सुजन-दुर्जन-पार्थक्यम् ।

( १५६ )

अधमा धनमिच्छन्ति धनमानौ च मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥

---

इति प्रथम प्रवाहः समाप्तः ।

---

# परिशिष्टम् ।

## प्रथम-प्रवाहः ।

## टिप्पनी ।

(३) विश्वप—विश्व पाति रक्षतीति विश्व + पा + कर्त्तरि ड ।

(४) तथा च "तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर। यादृशस्त्व महादेव तादृशाय नमो नम ॥"—इति शिवस्तोत्रे ।

(५) पद्मसद्मानम्—कमलासन चतुर्मुखम् । उपवीतम्—यज्ञसूत्रम् ।

(६) सरिदुदधिगत पङ्कजेन्दीवरादीति कविसमयप्रसिद्धि । यथा काचिन्नारी उदधिगतेन पद्मेन कर्णभूषण रचयति तद्वदित्यर्थ ।

(७) भारात—सरस्वति । इयात्—प्राप्नुयात् । लौकिक हि धनं व्ययितव्यत क्षीयते, भारतीभाण्डारन्तु व्ययितमप्युपचीयते इति वैचित्र्यम् । तथाचोक्त—न दानेन क्षयं याति विद्यारत्न महाधनमिति ।

(८) खे आकाशे गच्छन्तीति खगा पक्षिण तेषु इन्द्र श्रेष्ठ गरुड स एव केतुचिह्न यस्य तस्मै गरुडवाहनाय इत्यर्थ ।

(११) वचनीयम्—निन्दावादम् । त्वदुपासनेन—उप समीपे आसनमवस्थान मुपासनम्, तव उपासन तेन, तवेति कर्त्तरि षष्ठी । स्वपिति—निद्राति । पन्नग भोगतल्पे—सर्पफणारूपशय्यायाम् । का कथा प्राकृतजनेषु यतो नारायणोऽपि लक्ष्मीकुचकेन अन्धीभूत अन्यथा कथमनन्तशय्यामधिशेते इति भाव ।

(१४) क्रियते नहि—नहि रच्यते सीतावद् दुःखप्राप्तिशङ्कया इति भाव । रामेण—रामनाम्ना ।

(१५) कन्दुक—क्रीडनकविशेष भाँटा, गोला इति भाषा । नीप—रचकम् ।

(१६) श्रित—शरण प्रपन्न । गोपाल इति मत्वा—गा पालयतीति अन्वय नामकरणात् । त्वामाश्रितानां पुरुषाणां पुनर्जन्मविरहात् मातु स्तनक्षीरस्यापि अलभ्यत्वम् अपरप्रसूरक्षीरवाञ्छा तु सुदूरपराहतेति भाव ।

(१८) एवंविधैश्वर्यशालिनोऽपि भवतो मनो नास्तीत्येतमभावं पूरयितुं प्रार्थयते आभीरेति । वामे सुन्दरे नयने यस्या सा वामनयना रमणी । आभीरवामनयना गोपरमणी, तया हृतं मानसं यस्य तस्मै ।

(१९) चीरस्य सारस्य नवनीतमित्यर्थः । घनान्धतामसे—अन्धयति चक्षुरसमर्थं करोतीति अन्धं, घनं सुनिबिडं, तम एव तामसं घनम् अन्धं च तामसं यस्मिन् तस्मिन्, निबिडाज्ञानान्धकारपूर्णे इत्यर्थः । न लीनसे—आत्मगोपनं न करोषि, घनतिमिरमयस्थानस्यैव आत्मगोपनोपयोगित्वात् ।

(२०) नीलाब्जस्य नीलपद्मस्य मदमोषणे गर्वनाशके लोचने यस्याः ताम् । वापी—दीर्घिका । मरालिका—हंसी ।

(२१) शिशिरकिरणः—चन्द्रः । शैलकान्ता—पार्वती । प्रेतभूमिप्रचारी—प्रेतभूमौ श्मशाने प्रचरति यः सः । कृपयतु—कृपां करोतु, कृपाशब्दात् करोत्यर्थे णिचि कृपि इति नामधातो रूपम् । कोऽपि—अनिर्वचनीयस्वरूपः । देवः—दीव्यतीति देवो द्योतनशीलः । शिव इति शेषः, असाधारणविशेषणप्रयोगात् विशेष्योपस्थितिः ।

(२४) स्वयमेव शूली त्वं कथं नैरुज्याय आरोग्यकामनया मया निषेव्यसे स्वयमेव कपालभृत् त्वं किं कथम् अन्नाय वा निषेव्यसे । एवं परत्रापि यथायथं योज्यम् । तत्र शूली—त्रिशूलधारी, शूलरोगाक्रान्तश्च । यः आत्मरोगं शमयितुं न शक्नोति, स कथमन्यस्मै आरोग्यं प्रयच्छतीति भावः । एवं अन्यत्रापि । कपालभृत्—नरशिरोऽस्थिरूपभिक्षापात्रधारी, भिक्षुक इत्यर्थः । कामः—विषयभोगः कन्दर्पश्च । कपर्दी—जटाजूटधारी वराटकमात्रधनश्च । "कपर्दः खण्डपरशोर्जटाजूटे वराटके" —इति मेदिनी । किं तर्हि—तदा कथं निषेव्यसे इत्यत आह अन्तदिन इत्यादि । आलोकनाय—( त्वत्कर्तृकाय ) दर्शनाय । श्मशानचारी त्वमिति हेतोः मदीये जीवच्छरीरे अपतन्नपि मरणदिने श्मशानं नीते शवशरीरे यदि तव कृपाकटाक्षः पतेदिति मत्वा अर्चयसि इति भावः ।

(२५) नगेशः—हिमालयः । धनेशः—कुबेरः । ललाटवह्निः—ललाटे स्थितो वह्निर्यस्य स तस्य इतभाग्यस्येत्यर्थः । शेषः—परिणामः ।

(२६) शिवशरीरे भक्षहेतुर्वर्ण्यते एकेति । एका भार्या—पार्वती । समरवासका—समरस्य रणं वेत्ति या सा महिषासुरादिभिः युद्धव्यापृतत्वात् । द्वितीया—गङ्गा । निम्नगा—शिरसि स्थापितापि निम्नं गच्छति या सा तदाभूता पयसां निसर्गेण निम्नगामित्वात् कुलङ्गनामपि स्वामिनं वञ्चयित्वा दासादौ नीचजने आसक्तत्वात् । द्विरदवदनः—द्वौ रदौ दन्तौ यस्य स द्विरदो हस्ती, द्विरदवदनो गणेशः । षण्मुखः—कार्त्तिकेयः । भस्मदेहः—चिताभस्मलिप्तकायः स्वगृहं परित्यज्य श्मशानवासीत्यर्थः ।

(२७) स्वयं पञ्चमुखः शिव इति शेषः । गृहे चेत् अन्नपूर्णा न तिष्ठेदिति शेषः । तदा दिगम्बरः—दिश एव अम्बरं वस्त्रं यस्य स शिवः, निर्धन इत्यर्थः, तथा च—"दिगम्बरत्वेन निवेदितं वसु" इति कुमारे । अतएव पञ्चानन गजानन-

षडानन रूपेषु बहुषु आननेषु अन्नदानासमर्थ इति भाव । एतेन अन्नपूर्णाप्रभावात् शिवगृहमपि अन्नपूर्णं जातमिति अन्वर्थनामा सा देवीत्युक्त भवति ।

(२८) यत्र यस्मिन् कर्म्मणि कृते भोग ऐहिकं सुख भवतीति शेष तत्र मोचो न परस्परविरुद्धधर्म्मत्वात् ।

(२९) जडु जठरस्थिता त्व जठरवासक्लेश जानासीति त्वां याचते इत्यर्थ ।

(३०) काक —काकवत् तुच्छ । भागीरथीतीरे शाकलाभ इन्द्रत्वलाभादपि सुखकर इति भाव । पाकशासन —इन्द्र ।

(३१) अथ वचनभङ्ग्या गङ्गाया पापनाशिनीं शक्तिमाह यदीति । पापानि— जाह्नवीगामिभिर्नरै कृतानीति शेष । वदन्ति—जाह्नवीगामिनो नरामिति शेष । अप्रियम्—वक्ष्यमाण श्रुतिकटु वचनम् । कृतघ्ना —कृतानि प्राक्सम्पादितानि पाप कर्म्माणि घ्नन्ति जाह्नवीसेवया विनाशयन्ति ये ते कृतघ्नास्तत्सम्बोधने इत्येष्टक् प्रत्यय । नितरा—भृश । समुत्पाद्य—जनयित्वा । स्वयमुत्पाद्य स्वयमेव हननस्य अयौक्ति कत्वात् । तथाच—"विषवृक्षोऽपि संवर्द्ध स्वय छेत्तुमसाम्प्रतमि"ति कुमारे ।

(३३) रघुवंशस्य प्रथमश्लोकस्यानुरूप श्लोको वाणीति । वाणी वाक्यम् अर्थ अभिधेय , सयुक्तौ नित्यसम्बद्धौ, प्रतिपत्तये सम्यग्ज्ञानाय जनकौ मातापितरौ, शर्वाणी पार्वती शशिशेखर शिव । अत्र वागर्थाविव संयुक्तौ जगतो जनकौ शर्वाणी शशिशेखरौ वन्दे इत्यन्वय.। वाक्यार्थौ यथा नित्यसम्बद्धौ पार्व्वतीपरमेश्वरौ अपि तथा —अर्द्धनारीश्वरमूर्त्तौ एकं परित्यज्य अपरस्य यत्समयनवस्थानात् । अतएव वाक्यार्थयो सम्यग्ज्ञानलाभाय तयोराराधनमुचितमिति भाव । यतस्तौ जगतो मातापितरौ अतो वन्दे । एतेन तयोराराधने कारणान्तरमपि दर्शितम् ।

(३४) रामस्य ईश्वर इति षष्ठीतत्पुरुष इति रामस्योत्तरम् । राम एव ईश्वरो यस्येति बहुव्रीहिरिति शिवस्योत्तरम् । राम एव ईश्वर इति कर्मधारय इति ब्रह्मण उत्तरम् । षष्ठीतत्पुरुषं वदता रामेण स्वापेक्षया शिवस्य गौरव ज्ञापितम् । बहुव्रीहि स्वीकुर्व्वता शिवेन तद्विपरीतं कृतम् । अथ ब्रह्मा कर्मधारयेण रामशिवयोरभेद बोधितवान् ।

(३६) विन्देत्—लभेत । राजनि दुष्टानां शासितरि सति भार्य्या धनञ्च लभेत । अन्यथा प्रबलैरपहार्य्यत्वात् इति भाव ।

(३७) सारसमे —सारवति , पक्षे निखिलकार्य्याणां सारभूत तस्य जानहि । अकुटिले —सरले , पक्षे कुटिलतादोषरहिते । अच्छिद्रे —नीरन्ध्रे , पक्षे दोषशून्ये.। सुपरीक्षिते —कृतगुणदोषविचारे , उभयत्र तुल्यमेतत् । धार्य्यते—रक्ष्यते ।

(३८) सेकेन्दर —ग्रांकवरापरनामधेयो भारतसमाट्, –पुरन्दर इन्द्र , एतौ

विधिना तुलितौ—गुरुलाघवपरिज्ञानाय तुलादण्डे स्थापितौ। सिकेन्दरस्य धराधिपस्य इन्द्रस्य च स्वर्गाधिपस्य गुरुलाघवमूलकमेवेति भाव ।

(३८) आदित्यस्य तव विलोकनशक्तितेन सेदेन धर्मवारिणा मम भालस्थितानि विधिलिखितानि दु खसूचकाक्षराणि नश्यन्तु, भवदीयकृपावलोकनेन मम दुःखानि दूरीभवन्तु इति भाव ।

(४०) निष्कलङ्क —निर्दोष पक्षे कलङ्क। निरातङ्क —निर्भय, पक्ष राहुग्रासाद् भीत । पद्मिनीप्राणवल्लभ —पद्मिनी सुन्दरस्त्रीविशेष । राजमहिषी च तल्लक्षणोपेता।

(४१) विधातृवशेन—दैवाधीनतया। मनागपि—ईषदपि। सुलभ—भवो भवसि। स्वसदृशकिंचिद्गुणवती निकृष्टस्य तद्गुणपराभवाय उत्कृष्टेन कदापि न चेष्टितव्यमिति भाव ।

(४२) विषमम् उन्नतावनत सस्थान अवयवसन्निवेशो यस्य तादृश वपु । करभस्य —उष्ट्रशावकस्य।

(४३) मोह —मूढता वराकस्य—नीचस्य सरीसर्ति—सुष्ठुरितस्ततो गच्छति नरीनर्ति—पुन पुन नृत्यति। तस्य समञ्चीचमवस्थानमेव युक्तमिति भाव ।

(४४) तुल्यवर्णौ—समानवर्णौ छदौ पक्षौ यस्य तादृश । सङ्गत —एकत्रावस्थित ।

(४५) कालिमा—कृष्णत्वम्। काकलीकोविदा —अव्यक्तसूक्ष्ममधुरध्वनि काकली तस्या रसज्ञा । पुन —किन्तु।

(४६) रसाल —आम्रस्य । पतत्रिण —पक्षिण । तन्मञ्जरीरसास्वाद—तस्य रसालस्य मञ्जरी अभिनवमुकुलपल्लव तस्य रसास्वादनम्। कुहूमुखा —कोकिला ।

(४७) ज्योतिरिङ्गण —खद्योत, "जोनाकी" इति भाषा।

(४८) खर—गर्दभ । खरस्वरतया—कर्णपीडकतीव्रस्वरत्वेन हेतुना। अवरे—नीचे ।

(४९) पुरन्दरम् इन्द्र प्रार्थयते याचते पिपासोपशमनाय जलमिति शेष। असति प्रार्थनापूर्वे पिपासया म्रियते म्रियमाणोऽप्यन्यं न प्रार्थयते इत्यर्थ ।

(५१) विद्याचारित्वादिगुणैरसम्पन्नस्य तावदेव वाग्दूकता न यावत् महतामुदय ।

(५२) दलानाम्—पत्राणाम् । विवेकिन —विवेकका । मकरन्द —मधु ।

(५३) मत्स्यरङ्ग—मत्स्यदरिद्रपक्षिविशेष । माछराङ्गा इति भाषा। "मत्स्यरङ्गो मत्स्यरङ्गो मत्स्याशी च मत्स्यवेधक "—शब्दरत्नावली। निरातङ्क —निर्भय । लवणा असि लवणमिश्रं अम्भो यस्य तस्मिन् समुद्रे मज्जसि हिंस्रजलचरसङ्कुलोऽयं समुद्र इत्यविमृश्यैव मग्नो भवसि। जठरे—उदरस्य अग्नौ।

(५४) व्यजने —तालवृन्ते । आतपे —घर्मे । कलापिनां पिच्छे —मयूरपुच्छे । पदभ्रष्टे—स्थानच्युते ।

(५५) चरन्ति—भक्षयन्ति। अपरिग्रहाणि—नास्ति परिग्रह अन्यस्य स्वीकारो येषां तानि, अस्वामिकानि निर्झरतोयादीनीत्यर्थः। आराधयितु—तोषयितुम्।

(५७) विकारी—चापल्यादिविकारविशिष्टः। शफरी—क्षुद्रमत्स्यविशेष, 'पुँठी-माछ' इति भाषा। फर्फरायते—फर्फर गर्वभरेण अङ्गभङ्ग्या सञ्चरणशील, स इव आचरति।

(५८) दघका —दघा एव दघका, स्वार्थे क प्रत्ययः।

(६०) सदेत्यादि—निरन्तरप्रचुरमदसाविह्वलितमांसभोजनशील। अक्रमम् असम्पादितम् अभीष्टं भक्ष्य येन स।

(६१) कसारिविष्णु तस्य चरणोद्भूता या सिन्धुनंदी गङ्गेति यावत् तस्या कल्लोलेन महातरङ्गेण लालितं पोषित ते मन कुल्याना क्षुद्रकृत्रिमसरितां नीरे जले न रमते नातुरज्यते।

(६२) नीरक्षीरविभागे—नीरमिश्रक्षीरविभागे, नीर विहाय क्षीरपानरूपे कर्मणि हस एव समर्थो बकस्तु नेति।

(६३) परार्थाय—परेषां प्रयोजन साधयितुं। साधुजनाय स्वय दु खमनुभूय परेषां सुखमुत्पादयन्ति। तेषाञ्च सम्पदमपरे परिगृह्य भुञ्जते इति परस्परसादृश्य मवगम्यमिति।

(६४) महीरुहा —वृक्षा। अर्थिन —याचका।

(६५) विश्रान्ता शयका येषु ते। शाखी—वृक्ष। शाम्यति—विश्रामसुख लभते। कुञ्जर —हस्ती।

(६६) अर्कवृक्ष —'आकन्द इति ख्यातो वृक्षविशेष.। वर्षासु अर्कवृक्षाणां पत्रापगमो भवतीति प्रसिद्धि।

(६७) अरिष्टानि – दुरदृष्टानि अशुभानि वा। किम्—अनेकशो पादपानां वर्द्धने सेवनञ्च निरर्थकमिति भाव।

(७०) न अस्माभ्य रोचन्ते। "रुच्यर्थानां प्रीयमाण" इति चतुर्थी। गुणमय सूत्रात्मकं प्रशसनीयमित्यपि व्यज्यते। गुह्य—शिश्नादि। महात्मानोऽपि गुणमय जन्मान परेषां गुह्यगोपनञ्च कुर्वन्ति, अतस्तत्सादृश्यमेषामिति।

(७४) खरतापे.—प्रखरसूर्यकिरणे। अजाद्यै —छागलादिभिः।

(७५) दाशेरकस्य—उष्ट्रस्य। दासी—प्रीतिकरी। एतावतैव—वदर्या कण्टिकरत्वेनैव।

(७६) प्रथमवयसि—रोपणदशायाम्। पादे—मूलदेशे।

(७८) तृतीय—पश्चात् कारणादिव। छोद—विकाश'।

(१२२) वराकोदरपूरणे—तुच्छजठरभरणे।

(१२३) यन्ता—सारथिः। विकल—अपूर्ण अङ्गम् इत्यर्थः। विषमा—अयुग्मा सप्तसंख्यका दुर्दान्ता इत्यपि।

(१२४) उदारस्य—दानशीलस्य। शूरस्य—वीरस्य। विरक्तस्य—वैराग्ययुक्तस्य। निस्पृहस्य—सर्वथा स्पृहारहितस्य ब्रह्मानन्दमनुभवत इति यावत्। सर्वत्र तृणं तृणवत् तुच्छं भवतीत्यर्थः।

(१२५) सीदति—अवसादमाप्नोति। एक—एकाकी। अनर्घम्—अमूल्यम्। हिमाश्रय—स्वर्णसाहाय्यम्।

(१२६) निसर्गेण—स्वभावेन विशुद्ध निर्मल आत्मा यस्य तादृश सुजन, अञ्जनस्य उपमा सादृश्यं यस्य स परेषां सन्तापस्य तु स्वस्य पक्षे सन्तापस्य शान्तिरेव अर्थ प्रयोजनं यस्मिन् तद् यथा तथा परिभ्रमति कार्यव्यापृतो वर्तते। अञ्जनपक्षे सुगमम्।

(१२७) स्वपिति—योग्यपुत्रे भारं विन्यस्य निद्राति। सत्स्वपि दशसु पुत्रेषु भारवहनक्लेशो गर्दभीं न मुञ्चति।

(१४३) सुप्ते वस्तु। वैपरीत्याय कल्पते विपरीतगुणं भवति। दग्धेत्यादि—वह्निदाहप्रशमनकारीण्यपि सलिलान्यपि तेषां वह्निदाहं जनयन्तीति।

(१४४) धनदे—कुबेरे। चर्माम्बरधर—शार्दूलचर्मरूपवस्त्रपरिधायी।

(१४५) अजन्मनि—अपुनरावृत्तिविषये मोक्षार्थमिति यावत्।

(१४८) द्वे चक्षुषी, द्वौ कर्णौ द्वे नासिके मुखं, पायु, उपस्थश्च एतानि नव द्वाराणि। अतएव प्राणा एव विहङ्गम।

(१४९) मत्कुण—खटमल इति भाषा।

(१५१) कस्तूरी—मृगनाभि। पामरे—मूढे मनुष्ये इति यावत्। अल—व्यर्थम्, "अलं व्यर्थसमर्थयो इत्यमर"।

(१५२) स्तोकेन—अल्पेन। तुलाकोटि—तुलादण्डाग्रस्य।

(१५३) धनिनो—वसनभूषणादिभिस्तोषयन्ति। विशिष्टपरिच्छदा हि सभाया-मादियन्ते। अभ्यागत—अतिथि। गोभिरिति करणे तृतीया। शिरः गृहस्थेनेति शेष दधिदुग्धादीनां सुलभत्वादिति भाव। कृषिभि—कृषकैः। कृषका हि प्रायो दासाच्छादनदुःखं नानुभवन्तीत्यर्थः।

(१५४) लवन—लवनेन लवेन। कवन—कवनेन कवेन। लवयेदिति भौवादिकस्य चि धातो रूपम्।

---

# उद्भट-सागरः

## द्वितीय-प्रवाहः ।

## विषय-सूची ।


| विषय | श्लोकाङ्क |
|---|---|
| | १-८४ |
| देवता तरङ्ग | १ |
| परब्रह्म | २ |
| ब्रह्मा | ३ ४ |
| सरस्वती | ५ ७ |
| विष्णु | ८ |
| लक्ष्मी | ९ १२ |
| लक्ष्मी चरित्रम् | १३ |
| चपला | १४ १६ |
| रामचन्द्र | १७-१९ |
| सीता | २० |
| कौशल्या | २१ २६ |
| कृष्ण | २७-२९ |
| कृष्णलीला | ३० |
| मुरली | ३१ |
| कृष्णविरहे गोकुलावस्था | ३२ ३३ |
| राधिका | ३४ |
| यशोदा | ३५ ३६ |
| गोपी | ३७ |
| बलराम | ३८ ४३ |
| शिव | ४४ ५० |
| शिवलीला | ५१ |
| अर्द्धनारीश्वर | ५२ ५४ |
| पार्वती | ५५ ५७ |
| शक्तिलीला | ५८-६२ |
| गङ्गा | ६३ |
| हरशिरश्चन्द्र | ६४ (क+ख) |
| काशीधाम महिमा | |

| विषयः | श्लोकाङ्काः |
|---|---|
| मूर्त्तित्रयम् | ६५ |
| हरिहर-मूर्त्तिः | ६६ |
| **प्रश्नोत्तराणि** | **६७-८४** |
| (१) कृष्णयशोदा-प्रश्नोत्तराणि | ६७ |
| (२) दुर्गाकार्त्तिकेय प्रश्नोत्तराणि | ६८ |
| (३) बलिवामन-प्रश्नोत्तराणि | ६९ |
| (४) भरतकैकेयी प्रश्नोत्तराणि | ७० |
| (५) राधाकृष्ण-प्रश्नोत्तराणि | ७१-७२ |
| (६) राधागोपिका प्रश्नोत्तराणि | ७३ |
| (७) रावणाङ्गद-प्रश्नोत्तराणि | ७४ |
| (८) रावणविभीषण-प्रश्नोत्तराणि | ७५ |
| (९) लक्ष्मीनारायण-प्रश्नोत्तराणि | ७६ |
| (१०) लक्ष्मीपार्वती प्रश्नोत्तराणि | ७७-७८ |
| (११) विप्रयक्ष-प्रश्नोत्तराणि | ७९ |
| (१२) हरपार्वती प्रश्नोत्तराणि | ८०-८४ |
| **जीव-तरङ्गः** | **८५-११६** |
| **राजा** | **८५** |
| **राजसभा** | **८६** |
| **मन्त्री** | **८७** |
| **साधारण-राजस्तुतिः** | **८८-९०** |
| **जन्तुवर्गः** | **९१-११६** |
| काकः | ९१-९२ |
| कोकिलः | ९३-९४ |
| चक्रवाकः | ९५ |
| चक्रवाकी | ९६ |
| चातकः | ९७ |
| छागः | ९८ |
| दात्यूहः | ९९ |
| बकः | १०० |
| भेकः | १०१-१०२ |
| भ्रमरः | १०३ |

| विषय | श्लोकाङ्कः |
|---|---|
| | १०४ |
| मत्स्यरङ्ग | १०५ १०७ |
| मयूर | १०८ |
| मड्ड | १०९ |
| शशक | ११० |
| शृगाल | १११ |
| सर्प | ११२ |
| सिंह | ११३ ११४ |
| हंस | ११५ |
| हरिण | ११६ |
| हस्ती | ११७ १३१ |
| **उद्भित् तरङ्ग** | ११७ |
| सामान्य वृक्ष | ११८ |
| आम्र | ११९ |
| इक्षु | १२० १२१ |
| कदली | १२२ |
| कल्पवृक्ष | १२३ |
| केतकी | १२४ १२५ |
| चन्दन | १२६ |
| तिन्तिड़ी | १२७ |
| धुस्तूरम् | १२८ १२९ |
| पद्मम् | १३० |
| पलाश | १३१ |
| शालि | १३२-१४६ |
| **स्वभावोक्ति तरङ्ग.** | १३२ |
| तड़ाग | १३३ |
| नदी | १३४ |
| मलय | १३५ १३६ |
| मेघ | १३७ |
| वायु | १३८ १३९ |
| सरोवर | १४० १४४ |
| सागर | १४५ १४६ |
| सूर्यास्त वर्णनम् | |

| विषयः | श्लोकाङ्कः |
|---|---|
| **निन्दा-प्रशंसा-तरङ्गः** | **१४० २२५** |
| **(क) निन्दा तरङ्गः** | **१४०-१८६** |
| असन्तोष निन्दा | १४०-१४८ |
| उदर निन्दा | १४९ |
| ऋण निन्दा | १५० |
| कलिकाल-निन्दा | १५१ |
| कापुरुष-निन्दा | १५२ |
| कुकवि निन्दा | १५३-१५४ |
| कुपुत्र निन्दा | १५५ |
| कुवैद्य निन्दा | १५६ |
| कुसंसर्ग-निन्दा | १५७ |
| कृतघ्न निन्दा | १५८ |
| कृपण-निन्दा | १५९ १६० |
| खलादि निन्दा | १६१ १६२ |
| दारिद्र्य निन्दा | १६३ १६८ |
| दुर्जन निन्दा | १६९-१७३ |
| नारी निन्दा | १७४ |
| निर्गुण निन्दा | १७५ |
| भिक्षा निन्दा | १७६-१७८ |
| भृत्य निन्दा | १७९ |
| मद्यपान निन्दा | १८० |
| मूर्ख निन्दा | १८१ |
| युद्ध निन्दा | १८२ |
| प्रेम निन्दा | १८३ |
| लोकवाद निन्दा | १८४ |
| लोभ निन्दा | १८५ |
| स्थानच्युति निन्दा | १८६ |
| **(ख) प्रशंसा तरङ्गः** | **१८७ २२५** |
| उद्भट कविता प्रशंसा | १८७-१९० |
| उद्यम प्रशंसा | १९१ |
| गुण प्रशंसा | १९२ |
| ग्रहविशेष प्रशंसा | १९३-१९५ |

| विषयः | श्लोकाङ्कः |
| --- | --- |
| | १९५-१९६ |
| दान-प्रशंसा | १९७ |
| दाम्पत्यप्रेम-प्रशंसा | १९८ |
| धन-प्रशंसा | १९९ |
| धर्म प्रशंसा | २०० |
| धैर्य-प्रशंसा | २०१ |
| पण्डित प्रशंसा | २०२ |
| परिच्छद प्रशंसा | २०३ |
| परोपकार-प्रशंसा | २०४ |
| पौरुष प्रशंसा | २०५ |
| प्रार्थनाकौशल-प्रशंसा | २०६-२०७ |
| प्रेम प्रशंसा | २०८ |
| ब्राह्मण प्रशंसा | २०९ |
| मधुरभाषित्व-प्रशंसा | २१० |
| मनस्वि-प्रशंसा | २११ |
| मानि-प्रशंसा | २१२ |
| यज्ञोपवीत प्रशंसा | २१३ |
| विद्या-प्रशंसा | २१४ |
| विनय-प्रशंसा | २१५ |
| श्यालक-प्रशंसा | २१६ |
| सन्तोष-प्रशंसा | २१७-२१८ |
| सुकवि प्रशंसा | २१९-२२० |
| सुकाव्य-प्रशंसा | २२१-२२२ |
| सुजन-प्रशंसा | २२३ |
| सुपुत्र प्रशंसा | २२४ |
| सुवैद्य प्रशंसा | २२५ |
| सुसंसर्ग प्रशंसा | २२६-२२७ |
| रस-तरङ्गः | २२६ |
| (क) अद्भुत-रसः | २२७ |
| (ख) करुण-रसः | २२८-२३६ |
| (ग) शान्त रसः | २२८ |
| अनित्यता | २२९ |

| विषयः | | | श्लोकाङ्कः |
|---|---|---|---|
| कर्मफलम् | ... | ... | २३० |
| कालचरितम् | ... | ... | २३१ |
| दैवबलम् | ... | ... | २३२ |
| प्रार्थना | ... | ... | २३३ |
| विवेकः | ... | ... | २३४-२३५ |
| विषय-निन्दा | ... | ... | २३६ |
| (घ) हास्य-रसः | ... | ... | २३७ |
| विविध-तरङ्गः | ... | ... | २३८-२६० |
| आय-व्ययौ | ... | . | २३८ |
| उपनेत्रम् | ... | | २३९ |
| कण्टकः | ... | ... | २४० |
| कस्तूरी | ... | ... | २४१ |
| कुम्भः | ... | ... | २४२ |
| गोपीयन्त्रम् | ... | ... | २४३ |
| घटिका-यन्त्रम् | ... | ... | २४४ |
| जिह्वा | ... | ... | २४५ |
| तमाखुः | ... | ... | २४६ |
| तुलादण्डः | ... | ... | २४७ |
| दुग्धम् | ... | ... | २४८ |
| धनुर्बाणौ | ... | .. | २४९ |
| धूमः | ... | ... | २५० |
| नखरञ्जनी | ... | ... | २५१ |
| मद्यम् | ... | ... | २५२ |
| नौका | ... | ... | २५३ |
| प्रदीपः | ... | ... | २५४ |
| बडिशदण्डः | ... | .. | २५५ |
| मध्यस्थः | ... | ... | २५६ |
| विधि-विडम्बनम् | ... | ... | २५७ |
| विवाह-पणः | ... | ... | २५८ |
| सुजन-दुर्जन-पार्थक्यम् | ... | ... | २५९ |
| स्वभावाख्यानम् | ... | ... | २६० |
| परिशिष्टम् ( टिप्पणी ) | ... | | २६० श्लोकात् परम् । |

# उद्भट-सागरः ।

## द्वितीय-प्रवाहः ।

## श्लोक-सूची ।


| श्लोकाद्यांश | श्लोकाङ्क |
|---|---|
| ( अ ) | |
| अकृत्वा परसन्तापमप्राप्य | २१६ |
| अये तार्किककेशरी प्रचलति | २१८ |
| अये व्याध करघृतशर | २२० |
| अणुरप्यसतां सङ्गो नितरां | १५७ |
| अत्यन्तप्रेमसम्बन्धो न सुखाय | १८२ |
| अन्तकोपि हि जन्तूनाम् | १५० |
| अनन्तचरणोपान्तचारिणौ | २५१ |
| अनाहूता स्वयं यान्ति | १७७ |
| अन्तरायपरिग्रस्तं स्त्रीयमित्य | २०६ |
| अन्धा विद्वज्जनैर्हीना | ८९ |
| अनामा भूषणं धत्ते | २१० |
| अमात्य स सदा श्रेयान् | ८७ |
| अयं वारां पूर्णो निलय | १४२ |
| अयि बत गुरुगर्वं मा स्म | २४१ |
| अरुणोपरि विधुपार्श्वे | २४ |
| अर्थिने याचकं दद्या | १८४ |
| अलभ्यं यदायु पल | २४४ |
| अलाबुतन्तुकाष्ठानां | २४३ |
| अवय केवलकवय कीरा स्तु | १५४ |
| अशनं मे वसनं मे जाया मे | २३१ |
| अस्ति यद्यपि सर्वत्र | ११२ |
| अस्मान् विचित्रवपुषश्चिर | १०५ |
| ( आ ) | |
| आकोपितोऽपि सुजनो | (क) २५९ |
| आघाते भगुणा हतो | १० |
| आदावेव विभीत सम् | २१४ |
| आनीता नटवन्मया तव | २६ |
| आपेदिरेऽम्बरपथं | १३९ |
| आ मत्यो सेव्यतामीश | ३८ |
| आविष्कृतान् परगुणान् | १७२ |
| आहूय चिरुम स्वर्गम् | १९७ |
| ( इ ) | |
| इदमेव सुपाण्डित्यं चातुर्यं | २६८ |
| इन्द्रात् प्रभुत्वं ज्वलनात् प्रतापं | ८५ |
| इयं ब्राह्मणी राजन् अपूर्वैव | २०८ |
| ( उ ) | |
| उज्झित्वा दिगम्बरं | ४९ |
| उद्भटा कविता प्राचां | १८९ |
| उद्भटश्लोकसङ्गीतबाललीला | १८८ |
| उद्भटश्लोकसद्ग्रन्थ | १८७ |
| ( ए ) | |
| एक स एव जीवति | १४९ |
| एष क्रीडति शूकरस्य स्वगति | ११९ |

| श्लोकाद्यांश. | श्लोकाङ्क. |
| --- | --- |
| एतस्मिन्वनि विततवस्त्वमतुलं | ४२ |
| एहि गच्छ पतोत्तिष्ठ वद | १७२ |
| ( औ ) | |
| औत्पातिक तदिह देव | ३७ |
| ( क ) | |
| कतिपयदिवसस्थायी | १३२ |
| कथय किमपि दृष्ट | ९५ |
| कन्यायै रोचती रूप माने च | २५८ |
| करीन्द्रश्च कवीन्द्रश्च भूभृत्पुष्टि | २१७ |
| कर्णामृतं सूक्तिरसं विमुच्य | १९९ |
| कल्यान्तक्रूरकेलि क्रतुकदन | ४० |
| कल्लोलवेल्लितदृषत् | १४२ |
| कवलितमिह नालं कन्दलचेह | ९६ |
| कस्त्वं कस्यासि पुत्र | ७४ |
| कस्त्वं खर्व द्विजोऽहं | ९९ |
| कस्त्व चक्री नदि मम | ७६ |
| कस्त्व भो रजनीमुखे पद्मपति | ८२ |
| कस्त्व मूलो भगय भिषजं | ८४ |
| कस्मात् पार्वति निष्ठुरासि | ८१ |
| कस्मै किं कथनीय कस्य मन | २२६ |
| कान् पृच्छाम सुराः स्वर्गे | २२० |
| काली काला विषमसमया | ४७ |
| किं जन्मना देवगुणेन किं वा | २०४ |
| किं दातुरखिलैर्दोषैः | १८५ |
| किंशुके शुक मा तिष्ठ | १९० |
| कुकवि कवितादीर्घ धत्ते | १५१ |
| कुलशैलदलं पूर्णं सुवर्णगिरि | २ |
| कृष्णेनाम्ब गतेन रन्तुमधुना | ६७ |
| केका कर्णामृतं ते | १०६ |
| केय मूर्धान्धकार | ८१ |
| को हि तुलामधिरोहति | २४८ |
| कोन्दिवयस्य लाभोऽपि मत | २४९ |
| ( ख ) | |
| खद्योतास्तरलीभवन्ति | १२९ |
| खरतरकरक्लान्त | ६ |
| ( ग ) | |
| गङ्गाजलनयनानल | ४५ |
| गङ्गा पापं शशी तापं | २२१ |
| गङ्गे तव सांद्रमान वक्तु | ५९ |
| गरलपानजनिभर | ५१ |
| गुणाः सर्वत्र पूज्यन्ते दूरेऽपि | १९२ |
| गुणो विनयता श्यागो | १९५ |
| गुरुजनपरिचर्याधैर्यगाम्भीर्य | ३० |
| गुरुषु मिलितेषु शिरसा | २४० |
| गृहिणीसोदरस्नेह गृहिण्या | २१५ |
| ( च ) | |
| चान मूर्द्धि विभो गई जय | ७९ |
| चन्द्रार्धशोभितललाट | १९ |
| चापल्यादिह न सदाऽपि | ६८ |
| ( छ ) | |
| छायया कति न तर्पिता | १२५ |

| श्लोकाद्यांश: | श्लोकाङ्क. |
|---|---|
| ( ज ) | |
| जगत्प्राणो हरेत् प्राणान् | १२६ |
| जलस्य चक्रिणा वैरं विधाता | २५६ |
| जातोऽहं जनको ममैव जननी | २२८ |
| जामातरि कृष्णसर्पे पावके | १६२ |
| जायमानो हरेद् दारान् | १८२ |
| जीवनं सुखदं यत्न मरणञ्च | ६४ |
| ज्ञानं वर्द्धयति प्रिय वितनुते | २२५ |
| ( त ) | |
| तन्मायाया परमा मन्ये | २३५ |
| तव करकमलस्थां | २ |
| तवैव शरणागतं भवदधीनं | १२५ |
| ताताश्रया तात वने | २० |
| ताम्बीतरोरनुपकारि | १२१ |
| तिमिरारितमो हन्ति | ९१ |
| तीरेऽस्मिन् शफरीं गिलन्ननुदिनं | १०० |
| तुरगशतसहस्रं गोगणानाञ्च | १९६ |
| तृष्णे कृष्णेऽपि ते शक्ति | १४७ |
| तृष्णैवास्ति मनुष्याणाम् | १४८ |
| त्यक्त जन्मवन हृष्याङ्कुरवती | ११५ |
| ( द ) | |
| दग्धं खाण्डवमर्जुनेन बलिना | १६८ |
| दानार्थिनो मधुकरा यदि | ११६ |
| दिव्यं चूतरसं पीत्वा | १०१ |
| दिशि दिशि विलसन् | १४५ |
| दुःखेनोपार्ज्यते धर्म्म | १२२ |

| श्लोकाद्यांश | श्लोकाङ्क: |
|---|---|
| दुन्दुभिस्तु सुतरामचेतन | १९८ |
| दुर्योधन सकर्णोऽसि | ८९ |
| दूये कालाकर वीक्ष्य | १६७ |
| दृढतरगलविनिबद्ध | २४२ |
| दृश्यतेऽनुर्मदस्तेन महानघतया | २३९ |
| देहस्नेहो यदि तव | ६२ |
| दोषाकर शिरसि भाति | ४१ |
| दोष प्रायो न भवति गवां | ३१ |
| द्वाविमद्धमनर्हसि | २४६ |
| द्वारं खड्गिभिरावृतं | ९० |
| द्विगुरपि सद्वन्द्वोऽहं गृहे च मे | १६४ |
| ( ध ) | |
| धन्य धरणी ततोऽपि मथुरा | ९२ |
| धरित्रि पुष्पाञ्जलिरेष | १२० |
| धूम पयोधरपद कथमप्य | २५० |
| ध्वान्तौघ कवलीकरोति | १३६ |
| ( न ) | |
| न कालिन्दीनीरं नवजलधर — | २२ |
| न चौरहार्यं न च राजहार्यं | २१२ |
| नन्दगोपगृहपद्मवीथिका | ७१ |
| नभसि निरवलम्बे सीदता | १२६ |
| नवीनघनसुन्दरे विमलहेम | २७ |
| नवीनदीनभावस्य याचमानस्य (क) | १७६ |
| नवीनदीनभावस्य याचमानस्य (ख) | १७६ |
| नव्य भूसुरसूरिश्रेष्ठिममल | २५२ |
| नाथे कृतपदपात ... | २ |

| श्लोकाद्यांश: | श्लोकाङ्क: |
|---|---|
| निःशेषच्यवकारिणीं | ... ९४ |
| निधानं धर्म्माणां किमपि च | ... ६१ |
| निर्धौतप्रचलन्नीरनीरदचयैश्छन्ने | ... १०७ |
| निर्व्वाणदानशौण्डसर्व्वज्ञे | ... ५२ |
| निष्पन्नं शिशिरेण धीवरगणैः | ... १२८ |
| निष्पीतपीनतिमिराणि | .. १४४ |
| नूतनैर्दलसन्दोहैः | ... ११७ |
| नो चारु चरणौ न चापि | ... ९२ |
| नौका च खलजिह्वा च प्रतिकूल | ... २५२ |
| न्यस्तं यथा भूमिं हृदाऽपि | ... २२६ |
| ( प ) | |
| पथि धावन्निह पतितो | ... २५ |
| परं प्रचण्डा कटुवाक्यवादिनी | ... १७४ |
| परार्थे यः पीडामनुभवति | .. ११९ |
| पलाशकुसुमभ्रान्त्या | ... १०२ |
| पशुपतेरखिलेषु गलेषु हा | ... ५५ |
| पिकः कृष्णो नित्यं परमरुणया | ... ९१ |
| पिता रक्षाकरो यस्य | ... १०८ |
| पिबन्ति नद्यः स्वयमेव नाम्भः | ... २०२ |
| पुनः पुनर्भुवि चित्तः | ... २२४ |
| पुरा चरसि मानसे | ... ११४ |
| पूर्णोऽपि कुम्भो न करोति | ... १७५ |
| पृथ्वि त्वं भव कोमला, | ... १७ |
| पृष्ठेन कुम्भपरेण खञ्जो | ... २५७ |
| प्रत्यार्थं प्रतिपद्यति प्रतिपन्न | ... ११० |
| , जगतः | ... १६७ |

| श्लोकाद्यांश: | श्लोकाङ्क: |
|---|---|
| प्राऽऽट्काले घटं त्यक्ता | ... ९९ |
| ( ब ) | |
| बोधयन्ति न याचन्ते भिक्षुकाः | ... १५९ |
| ब्रह्मा च विष्णुश्च दिवाकरश्च | ... १५८ |
| ( भ ) | |
| भक्तिप्रीतिप्रणयसहितं | ... १६ |
| भग्नं शम्भुधनुर्गुणैकपदतं | ... ७५ |
| भावन्ते वनिताः कान्तो प्रतिपचो | ... १५१ |
| भिक्षु क्वास्ति वसिर्मखे | ... ७७ |
| भूतिविभूषितमाप यं | ... ४६ |
| भूशय्या ब्रह्मचर्यञ्च क्षमत्वं लघु | ... १७९ |
| भ्रष्टा भग्नमृगाङ्गमाल्यनिचय | ... ४२ |
| भो ब्रह्मन् भवता समं न घटते | ... २१२ |
| भ्रातः कस्त्व तमाखुरंममभिह | ... २४६ |
| ( म ) | |
| मदमेदे हुपत्नीव भूषितवधुः | ... १६५ |
| मद्यपस्य कुतः सत्यं दया | ... १८० |
| मन्ते दुःसहखेदशोकवलिते | ... २२४ |
| महतामाश्रयः कार्यः फलं | ... २१० |
| मा कुरु गुरुतागर्व्वं | ... १४१ |
| मातः कान्ति सदाङ्घ्रिपुष्पकमलं | ... ५६ |
| मातस्तातः क्व यातः | ... ७० |
| माधुर्यसाराधरितामृतस्य | ... १२७ |
| मानुषीकारचरिष्यसि नो | ... १६ |
| मित्रोदये व्याभिमुपैति सम्यक् | ... १०१ |
| मूर्खाय द्रविणं ददासि | ... १२ |

| श्लोकाद्यांश: | श्लोकाङ्क: |
|---|---|
| भ्रमिरपि भिन्नो मुकुति | ४४ |
| मौनी किं नु महेश | ८० |
| **( य )** | |
| यत् सद्गुणोऽपि सरलोऽपि | २५५ |
| यथाभ्यागतदानमान | ८ |
| यदि रामा यदि च रमा | १९३ |
| यद् ध्यायेत् सततं विधि' | २८ |
| यद्यपि बद्ध शैले | १४० |
| यन्माता विश्वमाभि समजनि | १२८ |
| यशोदया समा कापि देवता | ३४ |
| यशो धर्मो नयो दाक्ष्यम् | १९० |
| यस्य तनूरुहकुहरे नटनं | २५ |
| यां मत्वा यतुनेति | २१ |
| याचके मधुके तुल्या | १७८ |
| यावदेव कमला कृपान्विता | ११ |
| याविभ्रमा सुरहरपदात् | ५८ |
| युक्तोऽसि भुवनभारे | १२ |
| येऽभिमा मुकुलोद्गमाद् | ११८ |
| योऽभ्यसुखे दुर्वादे प्रियतमवदने | २०७ |
| **( र )** | |
| रच पात्रगतं स्नेहं प्रदीप | (क) २५४ |
| रवैरमूल्यैस्तनुषु | २०० |
| राधे चौर्यगुणादि कैतव | ७२ |
| राधे त्वं परिमुच्य मौनवसनं | ७१ |
| रामेव सीता कथिता स्वरस्व | २११ |
| राजो राजमपि सदा | १५ |
| रे पथिकागतस्य | १०२ |
| **( ल )** | |
| लक्ष्मी स्थिरा क्वचिदस्ति | ८८ |
| लभन्ते न विनोद्योगं | १९१ |
| **( व )** | |
| वाग्माधुर्यात् सर्वलोकप्रियत्वम् | २०९ |
| वात शीकरवर्षिभि श्रुति | १२९ |
| वामे भागे जनकतनया | १४ |
| वास प्रकृति खलु योग्यतायां | २०२ |
| वासं सम नैवहुताशनेन | ६२ |
| वासं छाद्ई मलयजगणे | १११ |
| विकसामि रवावुदिते | १६६ |
| विसर वितर वार्तं कुरु | १९ |
| विद्योतन्त वाति न गिरय | १२४ |
| विधाता चेत् स्रष्टा सृजतु | ६५ |
| विधीयते यद्द यदुनन्दनेन | २२ |
| विहगपुङ्गवपुङ्गवपाहनं | ६६ |
| वृत्तीव प्रपन्नायते प्रतिदिनं | ४८ |
| वैद्य व्याधिविपाकुम्भी | १ |
| वैद्यनाथ नमस्तुभ्यं भाषितारोव | १५६ |
| व्याघ्रे नैव गजे नैव | ९८ |
| व्यालाश्रितापि विफलापि | १२३ |
| **( श )** | |
| शक्यते येन केनापि | ९७ |
| शनैः शनैर्विलोयन्ते | १५५ |

| श्लोकाद्यांशः | श्लोकाङ्कः |
|---|---|
| शब्दशास्त्रविदां चिर | २०५ |
| शाखाशतसन्निबद्ध | १२१ |
| शान्तिकन्याश्रमसलाष्ठो | २३३ |
| शून्यमापूर्णतामेति मृत्युयाप्य | २०१ |
| शूलं शूली चक्रमादाय | ५२ |
| श्रीरामस्य दयामनो न कृतवान् | १११ |
| श्लोको हि भवति श्लोको | २१९ |
| श्वय विना शशिरिह | ४ |
| **( स )** | |
| संसार सब निःसारपदवी न | २२९ |
| सज्जनस्य हृदय नवनीत | २२२ |
| सत्कार्य भूषण पुंस | २१२ |
| सति प्राणाकृषि चौरे | १६० |
| सन्त्येव गिलिताकाशा | १२४ |
| स पातु श्रीपतिर्युष्मान् | ५ |
| समाकुलकुलायलाकुलदुकूल | २९ |
| सरटकुररकङ्का काककादम्ब | १०४ |
| सरस्वयो खलु सख्यमनारतं | (ख) २५९ |
| सर्वस्वं हलिमधी गर्यासि | ७ |
| सद्य निजौयशा तेजकेन | १५२ |
| साधुरेव न जहाति साधुता | २६० |
| साधु साधु रघुनाथ यत् त्वया | २३७ |
| सानन्द मदन सुताय सुधिय | १९३ |
| सिन्दूरपुञ्जकरीन्द्रकुम्भपतित | १८६ |
| सिंहिकासुतसन्त्रस्त | १०९ |
| सीमन्तिनी न्स गृहेऽत्रपूर्वा | ५० |
| सुनिष्णातोऽपि वेदान्ते | १७० |
| सुसुखोऽपि सुरूपोऽपि | २४० |
| सुरतरुमूलनिवासो | १२२ |
| सूर्योदयो यत्र सर्वे | १६१ |
| स्थापितमपहरणीयम् | ६० |
| स्यात् लक्षणामचरितादि | २२ |
| स्वरोचिषा कमलमल | १८ |
| स्वर्गौकसां स्तुतिगिराऽभिनवेन्दु | ५७ |
| **( ह )** | |
| हन्याद् हिपमविनीत | (ख) २५४ |
| हर पादाहति श्लाघ्या | १८१ |
| ह गङ्गाधरपथि चक्रिषु किं | ७८ |
| हे दारिद्र्य नमस्तुभ्य सिद्धोऽहं | १६३ |
| कोदपाऽपि दिगम्बरा विगतो | ५४ |

# उद्भट-सागरः

## द्वितीय-प्रवाहः ।

## देवता-तरङ्गः ।

### परब्रह्म ।

( १ )

वैद्यं व्याधिविपाकुलो धनपतिं दारिद्र्यदुष्टो जनः
खाद्यञ्च क्षुधितो हिमाम्बु तृषितश्छायातरुं तापितः ।
शोकार्त्तः स्वजनं वियोगविधुरो वत्सो यथा मातरं
तद्वत् तत् सततं स्मरामि परमं ब्रह्माभिधेयं महः ॥

( उद्भटसागरस्य )

---

### ब्रह्मा ।

( २ )

कुलशैलदलं पूर्णं सुवर्णगिरिकर्णिकम् ।
नमोऽधितिष्ठतेऽनन्तनाले कमलविष्टरम् ॥

( अगस्त्यस्य )

## सरस्वती ।

( ३ )

तव करकमलस्था स्फाटिकीमक्षमाला
नखकिरणविमिश्रा दाडिमीबीजबुद्ध्या ।
प्रतिपलमनुकर्षन् येन कीरो निषिद्धः
स भवतु मम भूत्यै वाणि ते मन्दहासः ॥
( कमलाकरस्य

( ४ )

श्वश्रूं विना वृत्तिरिह स्वतन्त्रा
प्रायः स्नुषाणामपवादहेतुः
यद्वाणि लोके रमया विहीनां
सतीमपि त्वामसतीं वदन्ति ॥

---

## विष्णुः ।

( ५ )

स पातु श्रीपतिर्यस्मानलक्ष्मीश्च पलायते ।
यन्नामस्मरणाच्चापि न लक्ष्मीश्चपलायते ॥
( उद्भटसागरस्य )

( ६ )

खरतरशरक्षतसुरपरमथन
    खगचर नगधर फणधरशये
परपदलयकर भवदरशमन
    जगदघभयहर सरसिजनयन ॥

( ७ )

सर्व्वस्वदं बलिमभो नयसि छलेन
    प्राणाधिकां जनकजां विपिने जहासि ।
उत्पाद्य यादवकुलं स्वयमेव हंसि,
    कस्त्वां भजेत यदि कालभयं नु न स्यात् ॥

## लक्ष्मीः ।

( ८ )

यत्राभ्यागतदानमानचरणप्रक्षालनाश्रयनं ;
सत्सेवा पितृदेवतार्च्चनविधिः सत्यं गवां पालनम् ।
धान्यानामपि संग्रहो न कलहश्चित्तानुरूपा प्रिया
तत्राहं निवसामि नित्यमचलेत्यूचे प्रिया श्रीपतिः ॥

# लक्ष्मी-चरितम् ।

( ९ )

लक्ष्मीः कथं ब्राह्मणेभ्यः कुप्यतीत्याह —

मयि कृतपदघात-
लुलितताः सपत्निकावेषी ।
इति कोपादिव रोषाद्
माधवयोषा द्विजं त्यजति ॥

( १० )

अन्यच्च :—

आघातो भृगुणा कृतो निजपतेः पादेन विष्णोरुर-
स्यम्भोधिं किल कुम्भसम्भवमुनिस्तातं निजं पीतवान् ।
उच्छिन्दन्ति निजं प्रियं शतदलं वासस्थलं ब्राह्मणा
इत्थं दुर्नयतो भवत्यकरुणा पद्मालया तान् प्रति ॥

( ११ )

लक्ष्मीदेव्या आगमने गमने च गृहस्यावस्थामिदं वर्णयति :—

यावदेव कमला कृपान्विता
तावदेव भवनं वधूः सुखम्
पौरुषान्विततनुर्जनादरो
नास्ति चेत् प्रथमवर्णवर्जितम् ॥
( कृष्णजीवन न्यायालङ्कारस्य )

( १२ )

निर्धना हि पण्डिता मूर्खास्तु कथं न तथेति प्रश्ने लक्ष्म्या उत्तरञ्च —

मूर्खाय द्रविणं ददासि कमले विद्वत्सु किं मत्सरो
नाहं मत्सरिणी बुधेषु न च मे मूर्खे रतिर्विद्यते ।
मूर्खेभ्यो द्रविणं ददामि यदहो तत्कारणं श्रूयतां
विद्वान् सर्वगुणैर्विभूषिततनुर्मूर्खस्य नान्या गतिः ॥

---

## अनन्तः ।

( १३ )

अनन्तदेवं भूकम्पनिवारणायाभ्यर्थयते —

युक्तोऽसि भुवनभारे
मा वक्रां वितनु कन्धरां शेष ।
त्वय्येकस्मिन् दुःखिनि
सुखितानि भवन्ति भुवनानि ॥

---

## रामचन्द्रः ।

( १४ )

वामे भागे जनकतनया राजते यस्य नित्यं
भ्रातृप्रेमप्रवणहृदयो लक्ष्मणो दक्षिणे च ।
पादाम्भोजे पवनतनयः श्रीमुखे वदनेव
साक्षात् ब्रह्म प्रणतवरदं रामचन्द्रं तमीडे ॥

टसांगरस्य )

( १५ )

सर्वासु विभक्तिषु रामशब्दस्य रूपं दर्शयन् श्लोकं रचयति —

रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः
रामान्नास्ति शुभायनं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥

( १६ )

अहल्यां मानुषीकृत्य गच्छन्तं नदीतरणकाले नाविकस्तु रामं प्रति नाविक-सोक्तिरियम् —

मानुषीकरणरेणुरस्ति ते
पादयोरिति कथा प्रथीयसी ।
क्षालयामि तव पादपङ्कजे
नाथ दारुदृषदस्य का भिदा ॥

---

## सीता ।

( १७ )

वनगमनकाले श्रीरामचन्द्रस्य सकरुणोक्तिरियम् —

पृथ्वि त्वं भव कोमला दिनमणे त्वं शैत्यमङ्गीकुरु
त्वं वर्त्मन् लघुतां प्रयाहि पवन त्वं खेदमुत्सारय ।
सान्निध्यं श्रय दण्डकावन गिरे त्वं गच्छ मार्गाद् बहिः
सीताऽसौ विपिनं मया सह यतो गन्तुं समुत्कण्ठते ॥

( १८ )

लङ्कावस्थानकाले कयाचित् राक्षस्या स्वपरिचये पृष्टा सीता नाह पापीयसी तेषां नामग्रहणेऽपि शक्तेति मन्यमाना इदमाह —

स्वरोचिषा कमलमलङ्करोति य-
स्तदन्वये द्विरथशताङ्ग एकराट् ।
तदात्मजौ विपिनचरौ तयो रमां
यमाह च स्वरविगमेऽस्मि तद्वधूः ॥

( १९ )

मायामृगं निहत्य पर्णशालामागतो रामचन्द्रः सीतामपश्यन् यदि नाम परिहासच्छलेन क्वापि लुक्कायिता भवेदिति विचिन्त्य सीतामुद्दिश्याह .—

वितर वितर वाचं कुत्र सीते गता त्वं
परिहर परिहासं सर्वथा दुःसहं मे ।
त्वमसि खलु तनूजा हन्त सर्वंसहायाः
सुतविरहविमुक्तप्राणराजात्मजोऽहम् ॥

---

## कौशल्या ।

( २० )

वनगमनकाले रामं प्रति कौशल्योक्तिरियम् :—

ताताज्ञया तात वनं प्रयाहि
व्याजेन बाल क्षणमत्र तिष्ठ ।
यस्यानमावेदयितुं मदीयाः
प्राणा बहिर्भूय पुरःसरन्तु ॥

---

कृष्णः ।

( २१ )

यां मत्वा यमुनेति दृष्टपरिगतो व्यूढो गवां गाहते
विद्युत्वानिति नीलकण्ठनिवहो यां द्रष्टुमुत्कण्ठते ।
उत्तंसाय तमालपत्रमिति संगृह्णन्ति यां गोपिकाः
कान्तिः कालियशासनस्य वपुषः सा पावनी पातु वः ॥

( २२ )

विधीयते यद् यदुनन्दनेन
नापेक्ष्यते तत्र सहायशक्तिः ।
पाञ्चालबालाञ्चलदीर्घता या
'न तत्र तन्तुर्न च तन्तुवायः' ॥

( २३ )

स्यात् कृष्णनामचरितादिसिताऽप्यविद्या
पित्तोपतप्तरसनस्य न रोचिकैव ।
किन्त्वादरादनुदिनं खलु सैव सेव्या
स्वाद्वी भवेदपि च तद्गदमूलहन्त्री ॥

( २४ )

हरिचरणसन्निधानां प्रभुभावो नास्त्येव इत्याह —

अरुणोपरि विधुपालो
तदुभयपार्श्वे तमःस्तोमः
हरिपदभजनगुणोऽयं
शात्रवमात्रं न कुत्रापि ॥

( २५ )

काचित् चलिता गोपी कृष्णं प्रत्याह —

पथि धावन्निह पतितो
रोदिष्यम्बाकरावलम्बाय ।
पतितोद्धारणसमये
किं न स्मरसि त्वमात्मानम्

( २६ )

भगवत्समीपे भक्तस्य निवेदनमेतत् ।—

आनीता नटवन्मया तव पुरः श्रीकृष्ण या भूमिका
व्योमाकाशखखाम्बराब्धिवसवस्त्वत्प्रीतयेऽद्यावधि ।
प्रीतो यद्यसि ताः समीक्ष्य भगवन् तद् वाञ्छितं देहि मे
नो चेद् ब्रूहि कदापि मानय पुनर्मामीदृशीं भूमिकाम् ॥

---

## कृष्णलीला ।

( २७ )

श्रीकृष्णस्य गोपीमनोहरमूर्त्तिधारणमाह ।—

नवीनघनसुन्दरे विमलहेमपीताम्बरे
त्रिभङ्गिमकलेवरे मुरलिचुम्बिबिम्बाधरे ।
मनोज्ञरसलम्पटे सखि विलोक्य वंशीवटे
मनो मम निरन्तरं मदनमोहने मज्जतु ॥

( २८ )

श्रीकृष्णस्य चूडाया काथ वामवक्रता इत्याह —

यद् ध्यायेत् सततं विधिः पदयुगं नाभ्यम्बुजे संस्थितो
गङ्गां यत्पदसम्भवां स्मररिपुर्धत्ते स्वमौर्धे सदा ।
यन्नित्यं कमला च सेव त इदं यत्नेन पादद्वयं
तद् द्रष्टु कमलापतेः सुकुटिला वामा च चूडा चिरम् ॥

( २९ )

समाकुलकुलावलाकुलदुकूलराशिं हरन्
कलिन्दतनयातटे निभृतनीपशाखां श्रयन् ।
स्मितानन सरोरुहे मधुरवेणुमारोपय-
न्नपायदघपावकादवतु कोऽपि गोपीपतिः ॥

( हरिहर शास्त्रिणः )

—

## मुरली

( ३० )

गुरुजनपरिचर्या धैर्यगाम्भीर्यलज्जा
निजनिजगृहकर्म स्वामिनि प्रेमसेवा ।
इति कुलरमणीनां धर्म जातमित्थं सर्वो
मुरमथन समस्तं हंसि वंशीरवेण ॥

## कृष्णविरहे गोकुलावस्था ।

( २१ )

कृष्णविरहेण व्रजवासिनां गोपानां गोपीगणानाञ्च अवस्था वर्णयत उद्धवस्योक्तिरियम् :—

दोहः प्रायो न भवति गवां दोहनस्यैव पाकः
　　चोराणां स्यात् स यदि घटते दुर्लभं तद्दधित्वम् ।
दध्नः सिद्धौ क्व खलु मथनं मन्थने क्वोपयोग-
　　स्तक्रादीनामिति गतिरभूदद्य गोधुग्गृहेषु ॥

---

## राधिका ।

( २२ )

धन्येयं धरणी ततोऽपि मथुरा तत्रापि वृन्दावनं
　　तत्रापि व्रजवासभाग्युवतयस्तत्रापि गोपाङ्गनाः ।
तत्राचिन्त्यगुणैकधामपरमानन्दात्मिका राधिका
　　लावण्याम्बुनिधिस्त्रिलोकरमणीचूडामणी काचन ॥

( भट्टमाधवस्य )

( २३ )

सखीं प्रति राधिकायाः खेदोक्तिरियम् —

न कालिन्दीनीरं नवजलधरं नीलनलिनं
　　वयस्यां श्यामाभां पिकमधुकरौ गञ्जनभिया ।
दृशोरग्रे कुर्वे तदपि सखि सर्वाण्यविरतं
　　ननान्दुर्दृग्भङ्गी हरि हरि भुजङ्गी दशति मे ॥

## यशोदा ।

( ३४ )

यशोदया समा कापि देवता नास्ति भूतले ।
उदूखले यया बद्धो मुक्तिदो मुक्तिमिच्छति ॥

## गोपी ।

( ३५ )

यस्य तनूरुहकुहरे
 नटनं ब्रह्माण्डकोटीनाम् ।
तमिमं गोपकृशाङ्गी
 लोचनभङ्गी विघूर्णयति ॥

( ३६ )

वृन्दावनं विहाय मथुरामागतं कृष्णं प्रति गोपीनामुक्तिरियम् —

भक्तिप्रीतिप्रणयसहितं मानदम्भाद्युपेतं
 चेतोऽस्माकं गुणवदगुणं गोदुहामङ्गमेतत् ।
विक्रीतं ते युगपदुभयं स्वीकृतं तत् त्वयाद्य
 हृद् गृह्णासि त्यजसि च वपुर्नाथ कोऽयं विचारः ॥

## बलरामः ।

( ३७ )

कदाचिद् भगवतो जगन्नाथदेवस्य रथयात्रायां सहसा रथात् पतिते बलरामं विलोक्य पुरीराजेन चलचित्तेन 'औत्पातिकम्' इति सभयमुक्तम्। तत्रावस्थितो जगन्नाथतर्कपञ्चाननसदाशयः 'औत्पातिकम्' इत्यस्य वक्ष्यमाणश्लोकेन पूरणं कृतवान् -

औत्पातिक नहि किं देव विचिन्तनीय
नारायणो यदि पतेदथवा सुभद्रा ।
कादम्बरीमदविघूर्णितलोचनस्य
युक्तं हि लाङ्गलभृत पतन पृथिव्याम् ॥
( जगन्नाथतर्कपञ्चाननस्य )

---

## शिवः ।

( ३८ )

मा मृत्यो सेव्यतामीश मा विश्वादस्ति य सदा ।
तस्मादाराद् भृशं दु ख तस्मादाराद् भृश सुखम् ॥
( उद्भटसागरस्य )

( ३९ )

चन्द्रार्धशोभितललाट महामहिम्न
किं ब्रूम ईश्वर गुणान् गुणसागरस्य ।

त्वन्नामकीर्त्तिपरिकीर्त्तनयत्न एव
पादाब्जरेणुमभिवाञ्छति पूर्णचन्द्रः ॥

( उद्भटसागरस्य )

( ४० )

चतुर्मुखस्तुतिवत् शिवं स्तौति —

कल्पान्तक्रूरकेलिः क्रतुकदनकरः कुन्दकर्पूरकान्तिः
क्रीडन् कैलासकूटे कलितकुमुदिनीकामुकः कान्तकायः ।
कङ्कालक्रीडनोत्कः कलितकलकलः कालकालीकलत्रः
कालिन्दीकालकण्ठः कलयतु कुशलं कोऽपि कापालिकः कौ ॥

( ४१ )

कश्चित् शिवम् आविश्य कथयति देव तव पारिषदानां मध्ये एतादृश कोऽपि नास्ति यो मम दुःखं तवान्तिके निवेदयेदिति —

दोषाकरः शिरसि भाति गले द्विजिह्वः
पाषाणजा सहचरो पशुरन्तरङ्गः ।
दुःखं निवेदयति को भवदन्तिके मे
त्वञ्च त्रिलोचन निमीलितलोचनोऽसि ॥

( ४२ )

भूषा भस्मभुजङ्गमास्थिनिचयः स्थानं श्मशानं प्रियं
त्रैलोक्यापचयोद्यतं विषमपि त्वन्नाऽमृतं स्वीकृतम् ।
यत् त्यक्तं सकलैः सुरासुरनरैस्तत्ते प्रियं प्रायश-
स्त्यक्तुं नार्हसि देव मामपि यतस्त्यक्तोऽस्मि सर्वैः प्रभो ॥

( ४३ )

कस्यचित् शैवस्य खेदोक्तिरियम् :—

एतज्जन्मनि वित्तवत्त्वमतुलं जन्मान्तरे शम्भुता
शम्भो सेवनया तवेत्यवधृतं व्यासादिवाक्यैर्मया ।
त्वत्सेवाविधिनैव सम्प्रति गतं जन्मैव न श्रीरभूद्-
देवाज्ञापय पारलौकिककथाऽप्येवं यथार्था नु किम् ॥

---

## शिवलीला

( ४४ )

शिवस्य कण्ठदेशे विषस्य चिरस्थितिकारणमाह :—

स्मृतिरपि भिक्षोः सुकृति-
र्मत्वेति महाविषं समाप्य महेशः ।
तत् तत्कण्ठे तस्थौ
जठरानलहेतिभीतिहेतोः सततम् ॥

( उद्भटसागरस्य )

( ४५ )

शिवस्य चन्द्रकलाधारणकारणं कथयति :—

गङ्गाजलनयनानल-
मिलनादेकत्र नैव कल्याणम् ।
तत् किं धूर्जटिमूर्द्धनि
मध्यस्था वैधवी लेखा ॥

( ४६ )

भूतिविभूषितमपि यं
गायति विद्वानभूतिकान्तेन ।
मृड़मुडुपरिह्वलचूड़ं
तमनिशमीड़े प्रपन्नोऽहम् ॥
( हरिहर शास्त्रिणः )

( ४७ )

शिवस्य मन्मथदेहदहनकारणमाह —

काली कान्ता विषमनयना सर्वदा युद्धशीला
पुत्रोऽप्येकः करिवरमुखो षण्मुखश्च द्वितीयः ।
भृत्यश्रेष्ठः कपिवरमुखो वाहनं वृद्ध उक्षा
स्मारं स्मारं स्वगृहचरितं मृन्मयो विश्वनाथः ॥

( ४८ )

शिवस्य विषपानकारणं कथयति —

वृद्धोक्षः प्रपलायते प्रतिदिनं सिंहावलोकाद् भिया
पश्यन् मत्तमयूरमन्तिकचरं भूषाभुजङ्गव्रजः ।
क्षान्तिं क्षाम्यति मूषिकोऽपि रजनौ भिक्षान्नमाभक्षयन्
दुःखैनेति दिगम्बरः स्मरहरो हालाहलं पीतवान् ॥

( ४९ )

श्मशानवासिन शिवस्य गृहस्थाश्रमवासकारणमाह ,—

उज्झित्वा दिशमम्बरं वरतरं वासो वसानश्चिरं
हित्वा वासरसं पुनः पितृवने कैलासहर्म्याश्रयः ।
त्यक्त्वा भस्म कृताङ्गरागनिचयः श्रीखण्डसारद्रवै-
र्दैवेशोऽपि हिमाद्रिजापरिणयं कृत्वा गृहस्थः शिवः ॥

( ५० )

शिवस्य भिक्षाकरणप्रवृत्ते कारणं कथयति —

सीमन्तिनी यस्य गृहेऽन्नपूर्णा
त्रिलोकरक्षां कुरुतेऽन्नदानैः ।
भिक्षाचरः सोऽपि कपालपाणि-
र्ललाटलेखो न पुनः प्रयाति ॥

## अर्द्धनारीश्वरः ।

( ५१ )

शिवस्य अर्द्धनारीश्वरत्वग्रहणकारण कथयति —

गरलपानजनिर्भरसंज्वरं
वपुरवेक्ष्य हरस्य हरप्रिया ।
हिमयितुं हिमभूमिधरात्मजा
किमु तदर्द्धमयी करुणामयी

## पार्वती ।

( ५२ )

निर्वाणदानगीर्वाणसर्वगर्वापहारिणि ।
कर्मनिर्मूलनार्थाय यतस्व विन्ध्यवासिनि ॥

( उद्भटसागरस्य )

( ५३ )

दुर्गानामाधारणमहिमानं दर्शयति —

शूलं शूली चक्रमादाय चक्री
दण्डं दण्डी वज्रमस्त्रञ्च वज्री ।
धावन्त्यग्रे पृष्ठतः पार्श्वतश्च
दुर्गादुर्गावादिनो रक्षणाय ॥

( ५४ )

देव्या लोकविरुद्ध भाव वर्णयन् तस्या एवानुग्रहं याचते भक्त —

स्त्रीरूपाऽपि दिगम्बरा त्रिजगतो माताऽपि सद्यौवना
कन्याऽद्रेरपि कोमला त्रिभुवनव्याप्ताऽप्यदृश्या जनैः ।
साध्वी च क्रमते स्वभर्तृहृदयं श्यामा जगन्मोहिनी
चित्रं रूपमवस्थितं भवतु ते मत्सम्पदे सर्वदा ॥

## शक्तिलीला ।

( ५५ )

कथं नाम दुर्गा दशभुजेत्युत्प्रेक्षते —

पशुपतेरखिलेषु सा
युगपदर्पयितुं कुसुमस्रजम् ।
परिणये द्विभुजा हिमशैलजा
दशभुजा किमभूदपि लीलया ॥

( ५६ )

शिवस्य वक्षोदेशे कालीमूर्तिधारणस्य कारणं कथयति

मातः कासि तवाऽङ्घ्रिपङ्कजमलं कैवल्यदं शीतलं
संश्रित्योरसि कालकूटकवलज्वालापनुत्त्यै हरः ।
कालग्रासविनाशकारिणि करालास्ये महेशप्रिये
संप्राप्याऽतुलनिर्वृतिं किमु भयादद्यापि तन्नोज्झति ॥

( ५७ )

स्वर्गौकसां स्तुतिगिराऽभिनवेन्दुचूड
वक्षोऽधिरूढचरणा शरणागतानाम् ।
संग्राममुक्तवसना दशनाग्रदष्ट
नम्रप्रसारितरसनाऽत्रपयेव काली ॥

---

## गङ्गा ।

( ५८ )

याविर्भूता सुरहरपदाच्छम्भोः शिरोराजिनी
या त्रैलोक्ये विहरणपरा कुण्डता विधेः स्थायिनी ।
या स्वं गर्भे समधिवसतां गर्भाप्तिविध्वंसिनी-
सा मन्दस्य प्रभवतु ममाऽनन्दाय मन्दाकिनी ॥

(उद्भटसागरस्य )

( ५९ )

गङ्गे तव महिमानं
वक्तुमनीशः फणीशोऽपि ।
वितरसि तत् पदमच्युत-
मच्युतचरणाच्युताऽपि त्वम् ॥

( ६० )

स्थापितमपहरतीयं
मा कुरु विश्वासमेतस्याम्
इह हि समर्पितवपुषो
न भवति वपुषः पुनर्लाभः ॥

( ६१ )

निधानं धर्माणां किमपि च विधानं नवमुदां
प्रधानं तीर्थानाममलपरिधानं त्रिजगतः ।
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापं तव तनुः ॥

( पण्डितराज जगन्नाथस्य )

( ६२ )

गङ्गाया दर्शनान्मुक्तिरित्याह —

देहस्नेहो यदि तव सखे मद्वचः पालनीयं
गङ्गां द्रष्टुं कथमपि न तत्सन्निधौ यास्यसि त्वम् ।
मुक्तिव्याघ्री तदुभयतटव्यापिनी चित्ररूपा
तत्रायान्तं ग्रसति न पुनर्देहसम्बन्धगन्धः ॥

---

## हरशिरश्चन्द्रः ।

( ६३ )

शिवशिरसि स्थिता शशिकला कथं क्षीणाऽस्तीति केनचित् पृष्टा प्रश्नकर्त्तारं प्रत्याह —

वासः समं नेत्रहुताशनेन
गर्जन् फणीन्द्रो भयमातनोति ।
किं पृच्छसि त्वं वपुषः कृशत्वं
भागीरथी जीवनमाददाति ॥

---

## काशीधाम-महिमा ।

( ६४ )

(क)

जीवनं सुखदं यत्र मरणञ्च ततोऽधिकम् ।
नौमि तां मुक्तिदां काशीं यत्रास्ते सशिवः शिवः ॥

( उद्भटसागरस्य )

(ख)

लीलार्ककेशवौ कोटी गङ्गा ज्या नगरं धनुः ।
कलिर्लक्ष्यं शरो धर्मः शिवो धन्वो करोतु शम् ॥

## मूर्त्तित्रयम् ।

( ६५ )

विधाता चेत् स्रष्टा सृजतु शुभकार्य्यं मम शतं
हरिश्चेत् पाता मां जनिमृतिभयात् पातु नियतम् ।
हरश्चेत् संहर्त्ता हरतु मम पापञ्च बहुलं
यतन्तां ते सर्व्वे मम सकरुणं मोचनविधौ ॥
( उद्भटसागरस्य )

## हरिहर-मूर्त्तिः ।

( ६६ )

विहगपुङ्गवपुङ्गववाहनं
मकरकुण्डलि कुण्डलिकुण्डलि ।
वपुरिदं कमलेशमहेशयो-
र्जयति चन्द्रकिचन्द्रकि चन्द्रकि ॥

## प्रश्नोत्तराणि ।

### (१) कृष्णयशोदा-प्रश्नोत्तराणि ।

( ६७ )

कृष्णेनाऽम्ब गतेन रन्तुमधुना मृद् भक्षिता स्वेच्छया
सत्यं कृष्ण स एवमाह मुषलो मिथ्याऽम्ब पश्याऽऽननम् ।
व्यादेहीति विकासितेऽथ वदने दृष्ट्वा समस्तं जग-
न्माता यस्य जगाम विस्मयरसं पायात् स वः केशवः ॥
( लीलाशुकबिल्वमङ्गलस्य )

## (२) दुर्गाकार्त्तिकेय-प्रश्नोत्तराणि ।

( ६८ )

चापल्यादिह वः सदाऽस्मि विधुरा यास्यामि तातालयं
तातस्ते जनयित्रि को गिरिगणस्येशो हि तातो मम ।
मातस्त्वं किमहो गिरीशदुहितेत्याभाषमाणे गुहे
प्रोन्मीलत्स्मितमुग्धनम्रवदना गौरी चिरं पातु वः ॥
( प्रेमचन्द्र तर्कवागीशस्य )

---

## (३) बलिवामन-प्रश्नोत्तराणि ।

( ६९ )

कस्त्वं खर्व द्विजोऽहं कुत इह नृपतेर्दक्षिणार्थी मखेऽस्मिन्
स्वर्णं गां वा गृहाण त्रिपदपरिमितां भूमिमभ्यर्थयेऽहम् ।
तुभ्यं दत्तेति यावद् वदति बलिरसौ तावदेव त्रिपादै-
स्त्रैलोक्याक्रान्तमूर्त्तिः प्रहसितवदनो वामनः पातु युष्मान् ॥

---

## (४) भरतकैकेयी प्रश्नोत्तराणि ।

( ७० )

मातस्तातः क्व यातः सुरपतिभवनं हा कुतः पुत्त्रशोकात्
कोऽसौ पुत्त्रश्चतुर्णां त्वमवरजतया यस्य जातः किमस्य ।

प्राप्तोऽसौ काननान्तं किमिति नृपगिरा किं तथासौ बभाषे
मद्वाग्भिः फलं ते किमिह तव धराधीशता हा हतोऽस्मि ॥
( हनूमतः )

---

## (५) राधाकृष्ण-प्रश्नोत्तराणि ।

( ७१ )

राधे त्वं परिमुञ्च नीलवसनं प्रारुह्य नौकामिमां
वातो वारिदसम्भ्रमाद् यदि वहेन्मग्ना भवेन्नौरियम् ।
शुक्लं तद् वसनान्तरं परिदधास्यादौ तवेदं वपुः
श्यामं श्याम नवीननीरदसमं तत्कैः समाच्छाद्यताम् ॥

( ७२ )

राधे चौर्यगुणाऽसि केशव हृतं किं ते परस्यैव वा
हंसोजानु मृगीचणं विधुसुधा कुम्भीशकुम्भद्वयम् ।
मच्चित्तं हरिमध्यकं विधिकृतं वस्त्रादिचौर्यं न मे
राधाया इति वाक्यमुग्धहृदयो राधापतिः पातु वः ॥

---

## (६) राधागोपिका-प्रश्नोत्तराणि ।

( ७३ )

नन्दगोपगृहपण्यवीथिका-
मालि यामि वद किं तवाऽनये ।

नीलमुज्ज्वलमतीव सुन्दर-
मानयस्व सखि केशबन्धनम् ॥

---

## (७) रावणाङ्गद-प्रश्नोत्तराणि ।

( ७४ )

कस्त्वं कस्यासि पुत्रः क्व पुनरिह गतः किं नु कृत्यञ्च कस्माद्
विस्पष्टं विष्टपानां विजयिनमपि मां मन्यसे त्वं तृणाय ।
हंहो पौलस्त्य पुत्रस्तव बलमथनस्याऽङ्गदोऽहं सुवेलात्
संप्राप्तो रामदूतः परिहर कुमते जानकीं वा शिरो वा ॥
( हनूमतः )

---

## (८) रावणविभीषण-प्रश्नोत्तराणि ।

( ७५ )

भग्नं शम्भुधनुर्गुणैरुपहतं सन्ताड़िता ताड़का
सापि स्त्री जरती खरप्रभृतयो व्यापादितास्तेऽर्भकाः ।
ताला: सप्त हतास्तृणानि किल ते बाली हतोऽसौ कपि-
र्बद्धो वारिनिधिर्निरुत्तर इति शूलाऽभवद् रावणः ॥
( हनूमतः )

---

## (९) लक्ष्मीनारायण-प्रश्नोत्तराणि ।

( ७६ )

केनचित् कारणेन मानिन्या लक्ष्म्या सापराधम्मन्यतया भीतस्य तदन्तिकगमस्य नारायणस्य च उक्तिप्रत्युक्ती —

कस्त्वं चक्री नहि मम घटाद्यर्थिता गच्छ शङ्खी
नाहं पश्याम्यशुचिमशिवं हुं गदी नास्मि वैद्या ।
खड्गी खातं वत मम पुरे नास्ति पद्मी तदेहि
क्षिप्रं पद्माकरमिति हरिः श्रीकरं प्रापदुक्तः ॥

( श्यामाचरण कविरत्नस्य )

---

## (१०) लक्ष्मीपार्वती-प्रश्नोत्तराणि ।

( ७७ )

भिक्षुः क्वास्ति बलेर्मखे पशुपतिः किं नास्त्यसौ गोकुले
मुग्धे पन्नगभूषणः सखि सदा शेते स शेषोपरि ।
दुर्गे मुञ्च विषादमाशु कमले नाहं प्रकृत्या चला
चेत्थं श्रीगिरिजासमुद्रसुतयोर्वाक्चातुरी पातु वः ॥

( ७८ )

हे गङ्गाधरपत्नि चक्रिवधु किं कुत्राऽस्त्यसौ नर्त्तको
वृन्दारण्यभुवि क्व सर्पकुतुकी स्यात् कालियस्य ह्रदे ।
भिक्षुः क्व गतोऽस्ति यज्ञसदने क्वासौ विषादी वको-
क्रोडे स्यादिति पद्मजागिरिजयोर्वाग्भङ्गयः पान्तु वः ॥

---

## (११) विष्णुशस्त्र-प्रश्नोत्तराणि ।

( ७९ )

चक्र ब्रूहि विभो गदे जय हरे कम्बो समाज्ञापय
भो भो नन्दक जीव पन्नगरिपो किं नाथ भिन्नो मया ।
को दैत्यः कतमो हिरण्यकशिपुः सत्यं भवद्भिः श्रमे
केनास्त्रेण नखैरिति प्रवदतो विष्णोर्मुखं पातु वः ॥

---

## (१२) हरपार्वती-प्रश्नोत्तराणि ।

( ८० )

मौलौ किं नु महेश मानिनि जलं किं वक्त्रमम्भोरुहं
किं नीलालकवेणिका मधुकरो किं भ्रूलता वीचिका ।
किं नेत्रे शफरी किमु स्तनयुगं रम्यं रथाङ्गद्वयं
सासूयामिति गोपयन् गिरिसुतां गङ्गाधरः पातु वः ॥

( ८१ )

निशि तमसि समुपस्थितं शिवमवलोक्य पार्वती पृच्छति शिवोऽपि तां प्रत्याह —[1]

केयं मूर्ध्नान्धकारे तिमिरमिह कुतः सुभ्रु कान्तेन्दुयुक्ते
कान्ताऽप्यत्रास्ति काचिन्ननु भवतु मया पृष्टमेतावदेव ।
नाहं द्वन्द्वं करोमीत्यपनय शिरसस्तूर्णमेनामिदानी-
मित्थं प्रोक्तो भवान्या प्रतिवचनजितः पातु वश्चन्द्रचूडः ॥

( ८२ )

भिक्षाटनात् प्रतिनिवृत्य सायं गृहागतं शिवं पार्वती पृच्छति, सोऽपि तां प्रतिवक्ति ।—

कस्त्वं भो रजनीमुखे पशुपतिः किं मे हरिर्वाहनं
देवोमापतिरत्र नास्ति कमला शूली न वैद्यालयः ।
भीमोऽहं गिरिराजपुत्रि चपले न द्रौपदीमन्दिर-
मित्थं तत्परिहासकेलिकलया मुग्धो हरः पातु वः ॥

( ८३ )

कस्मात् पार्वति निष्ठुराऽसि सहजं शैलोद्भवानामिदं
निःस्नेहाऽसि कुतो न भस्मपरुषः स्नेहं क्वचिद् विन्दति ।
कोपस्ते मयि निष्फलः प्रियतमे स्थाणोः फलं किं भवे-
दित्थं निर्वचनीकृतो दयितया शम्भुः शिवायाऽस्तु वः ॥

( ८४ )

कस्त्वं शूली मृगय भिषजं नीलकण्ठः प्रियेऽहं
केकामेकां कुरु पशुपतिर्लाङ्गूलं ते कथं न ।
स्थाणुर्मुग्धे न वदति तरुर्जीवितेशः शिवाया
गच्छाटव्यामिति हतवचाः पातु वश्चन्द्रचूडः ॥

---

## जीव-तरङ्गः ।

### राजा ।

( ८५ )

इन्द्रात् प्रभुत्वं ज्वलनात् प्रतापं
क्रोधं यमाद् वैश्रवणाच्च वित्तम् ।

पराक्रमं रामजनार्दनाभ्या-
मादाय राज्ञः क्रियते शरीरम् ।

---

## राजसभा ।

( ८६ )

अन्धा विद्वज्जनैर्हीना मूका कविभिरुज्झिता ।
बधिरा गायनैर्हीना सभा भवति भूभृताम् ॥

( भट्टमल्लस्य )

---

## मन्त्री ।

( ८७ )

अमात्यः स सदा श्रेयान् काकिनीं यः प्रवर्द्धयेत् ।
कोषः कोषवतः प्राणाः प्राणाः प्राणा न भूपतेः ॥

---

## साधारण-राजस्तुतिः ।

( ८८ )

लक्ष्मीः स्थिरा क्वचिदहो क्वचिदेव वाणी
नैकत्र धीर वसतः सततं विरोधात् ।
चित्रं परं तदुभयोस्त्वयि सन्निवेशो
मन्ये तवास्ति हृदये भगवान् मुकुन्दः ॥

( ८९ )

दुर्योधनः सकर्णोऽसि हृदि शल्योऽसि विद्विषाम् ।
सकृपो धृतराष्ट्रोऽसि त्वमेकः कौरवायसे ॥

( ९० )

द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् सैव चिरन्तनप्रणयिनी शून्येऽपि राज्यस्थितिः ॥

---

## जन्तुवर्गः ।

### काकः ।

( ९१ )

तिमिरारिस्तमो हन्ति तेन शङ्कितमानसाः ।
वयं काका वयं काका रटन्तीति प्रगे द्विकाः ॥

( ९२ )

नो चारू चरणौ न चापि रुचिरा चञ्चूर्न रुच्यो रवो
नो लीलाललिता गतिर्न च शुचिः पक्षग्रहोऽयं तव ।
ओष्ठश्रुत्यतिदुर्भगं रवमिह स्थाने वृथैवोद्गिरन्
मूर्ख ध्वाङ्क्ष न लज्जसेऽप्यसदृशं पाण्डित्यमुद्घाटयन् ॥

---

## कोकिलः ।

( ८३ )

पिकः कृष्णो नित्यं परमकरुणया पश्यति दृशा
परापत्यद्वेषी स्वसुतमपि नो पालयति यः ।
तथाप्येषोऽमीषां सकलजगतां वल्लभतमो
न दोषा गण्यन्ते मधुरवचसां केनचिदपि ॥

( ८४ )

कोकिलानां कुहुरवकारणमाह —

निःशेषक्षयकारिणीं कुमुदिनीनाथस्य बन्धोः कुहुं
हन्तुं प्राप्तशरासने रतिपतौ क्रोधादिव भ्राम्यति ।
अन्विष्यन्त इवास्य गूढ़पुरुषाः सर्व्वे मदा सम्भ्रमा-
दत्रात्रेत इतः कुहुः कुहुरिति प्राहुर्मुहुः कोकिलाः ॥
( श्यामाचरण कविरत्नस्य )

---

## चक्रवाकः ।

( ८५ )

कथय किमपि दृष्टं स्थानमस्ति श्रुतं वा
व्रजति दिनकरोऽयं यत्र नास्तं कदाचित् ।
इति विहगसमूहान् सादरं वक्ति नित्यं
रजनिविरहभीतश्चक्रवाको वराकः ॥

---

## चक्रवाकी ।

( ८६ )

रात्रौ विरहिणी चक्रवाकी दिवा चक्रवाकेण सह कृतं कार्यं स्मरन्ती विलपति —

कवलितमिह नालं कन्दलञ्चेह दष्ट-
मिह हि कुमुदकोषे पीतमम्भः सुशीतम् ।
इति विलपति रात्रौ पर्य्यटन्ती तटान्ते
सहचरपरिमुक्ता चक्रवाकी वराकी ॥

---

## चातकः ।

( ८७ )

स्वगौरवं सर्वथा रक्षणीयमित्याह —

शक्यते येन केनाऽपि जीवनेनैव जीवितुम् ।
किन्तु कौलव्रतोच्छेदप्रसङ्गः परदुःसहः ॥

---

## छागः ।

( ८८ )

व्याघ्रं नैव गजं नैव सिंहं नैव च नैव च ।
अजापुत्रं बलिं दद्याद् देवो दुर्बलघातकः ॥

---

## दात्यूहः ।

( ९९ )

प्रावृट्काले गृहं त्यक्त्वा सुखी को वा भवेत् क्व वा
इतीरयति दात्यूहः को वा को वा क्व वा क्व वा ॥

---

## बकः ।

( १०० )

तीरेऽस्मिन् शफरीं गिलन्ननुदिनं गाम्भीर्यमम्भोनिधे-
र्विज्ञातुं कथमुद्यतोऽसि बक हे निक्षिप्य चञ्चुपुटम् ।
यो मग्नामिह मेदिनीमुदहरत् कल्पान्तनीरस्थिता
जानीते यदि केवलं स भगवान् कोलावतारो हरिः ॥

---

## भेकः ।

( १०१ )

दिव्यं चूतरसं पीत्वा गर्वं नाप्नोति कोकिलः ।
पीत्वा कर्दमपानीयं भेको मकमकायते ॥

( १०२ )

भेक स्वावासकूपे दैवादागत राजहंसं विलोक्य कथयति, राजहंसस्य च प्रत्युक्ति —

रे पक्षिन्नागतस्त्वं कुत इह सरसस्तात् कियद् भो विशालं
किं मद्धाम्नोऽपि बाढं नहि नहि सुमहत् पाप मा ब्रूहि मिथ्या ।
इत्थं कूपोदरस्थः शपति तटगतं दर्दुरो राजहंसं
नीचः स्वल्पेन गर्वी भवति सुविषमं नापरो येन दृष्टः ॥

---

## भ्रमरः ।

( १०३ )

पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः ।
सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्त्तुमिच्छति ॥

---

## मत्स्यरङ्कः ।

( १०४ )

मत्स्यरङ्कस्य खेदोक्तिरियम् —

सरटकुररकङ्काः काककादम्बहंसा
अहिनकुलमनुष्याः के न खादन्ति मत्स्यान् ।
अहमतितनुजीवी चौर्यमीनोपभोजी
जगति विदितमेतद् मत्स्यरङ्कः कलङ्की ॥

---

## मयूरः ।

( १०५ )

मयूरं प्रति तत्पुच्छानाम् उक्तिरियम् :—

अस्मान् विचित्रवपुषश्चिरपृष्ठलग्नान्
कस्माद् विमुञ्चसि विभो नहि मुञ्च मुञ्च ।
हा हन्त केकिवर हानिरियं तवैव
गोपालमौलिमुकुटे भविता स्थितिर्नः ॥
( राममाणिक्य विद्यालङ्कारस्य )

( १०६ )

केका कर्णामृतं ते कुसुमितकबरीकान्तिहारी कलापः
कण्ठच्छाया पुरारेर्गलरुचिरुचिरा सौहृदं मेघसंघैः ।
विश्वद्वेषिद्विजिह्वस्फुरदुरुपिशितैर्नित्यमाहारवृत्तिः
कैः पुण्यैः प्राप्यते तत् सकलमपि सखे चित्रवृत्तं मयूर ॥
( शार्ङ्गधरस्य )

( १०७ )

मयूराणां केकारवकारणमाह :—

निर्घोषप्रवनीलनीरदचयैश्छन्ने नभोमण्डले
ये गच्छन्ति जना विदेशमधुना का ऽबला मानिनी ।
एतत् केकिकुलं ब्रवीति परितः संचिन्त्य संसम्भ्रमात्
कृत्वा बर्हविकाशमुन्नतगिरः केकेति वाणीं रुषा ॥
( श्यामाचरण कविरत्नस्य )

---

## शङ्खः ।

( १०८ )

पिता रत्नाकरो यस्य कमला यस्य सोदरा ।
शङ्खो रोदिति भिक्षार्थी फलं भाग्यानुसारतः ॥
( भट्टगोविन्दराजस्य )

## शशकः ।

( १०९ )

न कोऽपि दैवमतिवर्तते —

सिंहिकासुतसन्त्रस्तः शशः शीतांशुमाश्रितः ।
जग्रास साश्रयं तत्र तमन्यः सिंहिकासुतः ॥

---

## शृगालः ।

( ११० )

प्रत्याशं प्रतिपद्यति प्रतिपलं चञ्चूर्यमाणो मुदा
त्वं शार्दूलरवानुकारिनिनदं कृत्वाऽध्वगांस्त्रासय ।
यस्तत्त्वं तव वेत्ति फेरव महान् यत्नोऽपि तस्मिन् सुधा
तस्मात् संवृत एव तिष्ठ न यथा पान्थैः स्फुटं ज्ञायसे ॥

---

## सर्पः ।

( १११ )

वासः सार्धं मलयजगणैः कोमलस्पर्शमङ्गं
सुनिर्वाहः प्रयतपवनैः मस्तकं रत्नयुक्तम् ।
तत्राप्याशीविष इति जनैस्त्यज्यते नाममात्राद्
निन्द्यः सर्वो भवति नितरामाख्यदोषेण हन्त ॥

---

## सिंहः ।

( ११२

एषः क्रीडति शूकरश्च खनति द्वीपी च गर्वायते
　　क्रोष्टा क्रन्दति वल्गतीह शशको वेगाद् रुरुर्धावति ।
निःशङ्कैः करियोतकैर्गिरितटयोत्पाद्यते लीलया
　　हंहो सिंह विना त्वयाऽद्य विपिने कीदृग् दशा वर्त्तते ॥

---

## हंसः ।

( ११३ )

"तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः" इति वाक्यं दृष्टान्तेन द्रढयति :—

अस्ति यद्यपि सर्वत्र नीरं नीरजराजितम् ।
रमते न मरालस्य मानसं मानसं विना ॥

( ११४ )

पुरा सरसि मानसे विकचपङ्कजालिस्खलत्-
　　परागधवलीकृते पयसि येन नीतं वयः ।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
　　मरालकुलनायको विषदने विधौ वर्त्तते ॥

---

## हरिणः ।

( ११५ )

मृगस्योक्तिरियम् —

त्यक्तं जन्मवनं तृणाङ्कुरवती मातेव मुक्ता स्थली
विश्रामस्थितिहेतवो न गणिता बन्धूपमाः पादपाः ।
बालापत्यवियोगकातरमुखी त्यक्ताऽर्द्धमार्गे मृगी
पश्यन्त्यः पदवी तथाप्यकरुणव्याधा न मुञ्चन्ति माम् ॥

---

## हस्ती ।

( ११६ )

कविरर्थी कस्यचित् धनिनो गृहात् हताशः प्रतिनिवर्त्तमानस्तमिदमाह —

दानार्थिनो मधुकरा यदि कर्णघातै-
र्दूरीकृताः करिवरेण मदान्धबुद्धया ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥

---

# उद्भित्-तरङ्गः ।

## सामान्य-वृक्षः ।

( ११७ )

नूतनैर्दलसन्दोहैस्तरुर्यैरेव शोभते ।
जहाति जीर्णास्तानेव किं वा चित्रं कुजन्मनः ॥

( उपाध्यायोदयस्य )

---

आम्रः । 

( ११८ )

येऽभिज्ञा मुकुलोद्गमादनुदिनं त्वामाश्रिताः षट्पदा-
स्ते भ्राम्यन्ति फलाद् बहिर्बहिरहो दृष्ट्या न संभाषसे ।
ये कीटास्तव दृक्पथञ्च न गतास्ते त्वत्फलाभ्यन्तरे
धिक् त्वां चूततरो परापरपरिज्ञानानभिज्ञो भवान् ॥

---

इक्षुः ।

( ११९ )

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥

( इन्द्रराजस्य )

---

कदली ।

( १२० )

धरित्रि पुष्पाञ्जलिरेव तुभ्यं
सुता मदीयास्तव पालनीयाः ।
इतीव रम्भा नमिताग्रमौलिना
रोरुद्यमाना मकरन्दबिन्दुना ॥

( १२१ )

तालीतरोरनुपकारि फलं फलित्वा
लज्जावशादुचित एव विनाशयोगः ।
एतत्तु चित्रमुपकृत्य फलैः परेभ्यः
प्राणान् निजान् झटिति यत् कदली जहाति ॥

---

कल्पवृक्षः ।

( १२२ )

कञ्चित् धनिनमुद्दिश्य उक्तिरियम् —

सुरतरुमूलनिवासी
यद्युपवासी भवेदर्थी ।
कमपरभूरुहमवनौ
स्वोदरभरणाय याचतामेषः ॥

---

केतकी ।

( १२३ )

व्यालाश्रितापि विफलापि सकण्टकापि
वक्रापि पङ्किलभवापि दुरासदापि ।
गन्धेन बन्धुरसि केतकि सर्वजन्तो-
रेको गुणः खलु निहन्ति समस्तदोषान् ॥

---

## चन्दनः ।

( १२४ )

सारवान् क्षुद्रोऽपि असारस्थूलं पराभवतीत्याह —

सन्त्येव गिलिताकाशा महीयांसो महीरुहाः ।
तथापि जनताचेतोनन्दनश्चन्दनद्रुमः ॥

( हरिगणस्य )

( १२५ )

विविधगुणसम्पन्नोऽपि धनशून्यत्वेन स दरिद्राय न रोचते इत्याह —

छायया कति न तर्पिता जनाः
सौरभैः कति न वासिता दिशः ।
को भवन्तमपहातुमीहते
क्षुन्न चेज्जगति चन्दनद्रुम ॥

---

## तिन्तिड़ी ।

( १२६ )

जगत्प्राणो हरेत् प्राणान् जीवनं जीवनं हरेत् ।
ययोर्हरे किमाश्चर्यं प्राणदा यमदूतिका ॥

( कविचन्द्रस्य )

## धुस्तूरम् ।

( १२७ )

माधुर्यसाराधरितामृतस्य
तत् कण्टकित्वं पनसस्य सह्यम् ।
उन्मादिनो मातुलपुत्रकस्य
सहामहे किं तव कण्टकित्वम् ॥

---

## पद्मम् ।

( १२८ )

यन्माता विष्णुनाभिः समजनि तनयो यस्य देवः स्वयम्भू
र्लक्ष्मीर्यसंश्रयाभूद् यदपि करतले भारती संबभार ।
भानुर्यस्यास्ति मित्रं तदपि सरसिजं क्षीणमिन्दोर्मयूखै
स्त्रातुं नैवोत्सहन्ते गतसुकृतफलं प्राप्तकालं सहायाः ॥

( १२९ )

खद्योतास्तरलीभवन्ति भगवानस्तं गतो भानुमान्
कोकः शोकमुपैति मत्तमनसः क्रेंकुर्वते कौशिकाः ।
इत्थं चेत् सदसद्विवेकविधुरो धाता तदेतादृशं
न द्रष्टव्यमितीव मुद्रितवती पत्रेक्षणं पद्मिनी ॥

---

## पलाशः ।

( १३० )

किंशुके शुक मा तिष्ठ चिरं भाविफलाशया ।
बाह्यरङ्गप्रपञ्चेन के के नानेन वञ्चिताः ॥

---

## शालिः ।

( १३१ )

शाखासन्ततिसन्निरुद्धनभसो भूयांस एवावनौ
विद्यन्ते तरवः फलैरविकलैरार्त्तिच्छिदः प्राणिनाम् ।
किन्तु छिन्नदलैरलङ्कृततनोः शालेः सुमस्तुङ्गतां
दत्त्वा येन निजं शिरः सुकृतिना के नाम न प्रीणिताः ॥

---

# स्वभावोक्ति-तरङ्गः ।

## तड़ागः ।

( १३२ )

तत्त्वकारविहीन याचितो जन आश्रयभूत दातार दानविमुखं विदित्वा इदमाह —

आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्ति ।
सङ्कोचमञ्चति सरस्त्वयि दीनदीनो
मीनो नु हन्त कतमां गतिमभ्युपैति ॥

---

## नदी ।

( १३३ )

धन पदगौरवं वा न चिरं तिष्ठति तस्मात् तन्मदमत्ततया किमपि दुष्कर्म न करणीयमित्युपदिशति —

कतिपयदिवसस्थायी
पूरो दूरोन्नतोऽपि भविता ते ।
तटिनि तटद्रुमपातन
पातकमेकं चिरस्थायि ॥

---

## मलयः ।

( १३४ )

विद्योतन्ते कति न गिरयस्तेषु किं नोदयन्ते
शाखावन्तः खदिरबदरीशालशाखोटकाद्याः ।
धन्यस्तावन्मलयशिखरी यत्र जातास्त एव
स्वैरामोदैस्त्रितयभुवनं प्रीणयन्तः स्फुरन्ति ॥

---

## मेघः ।

( १३५ )

आमहां भूमिमुन्मीलितरूपां जीविकामुन्मोचयितुकाम कोऽपि कस्यचिद् भूस्वामिनः शरणापन्नस्तेन प्रीतिवशतः पोषितोऽपि स्वार्थसिद्धिमलभमानस्तमिदमाह —

तवैव शरणागतं भवदधीनवृत्तिं प्रभो
तृषार्त्तमपि चातकं जलद वञ्चितं मा कुरु ।

इदमस्तु यदि निश्चितं सलिलमेव देयं न मे
कथं मधुरनिस्वनैर्विधुरमाश्वसिष्यादरात् ॥

( १३६ )

कश्चिदर्थी कस्यचिद्धनिनो गृहं गत्वा तन्मुखदर्शनाय सुचिरमवतिष्ठमान-प्रत्याशापन्नत्वमपि नोपलभ्य तमिदमाह —

नभसि निरवलम्बे सीदता दीर्घकालं
त्वदभिमुखनिविष्टोत्तानचञ्चूपुटेन ।
जलधर जलधारा दूरतस्तावदास्ता
ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन ॥

---

## वायुः ।

( १३७ )

प्राणास्त्वमेव जगतः पवनस्त्वमेव
विश्वं पुनासि परितः परितो विसृत्य ।
एकं पुनः सकलभूषण दूषणं ते
वह्नेः सखा भवसि यद् भवनं दिधक्षोः ॥

---

## सरोवरः ।

( १३८ )

मेघं प्रति सरोवरस्योक्तिरियम् —

निष्पङ्कं शिशिरेण धीवरगणैर्निर्मीननिष्कूर्मकं
व्याधैर्निर्विहगं निरम्बु रविणा निर्नालकं दन्तिभिः ।

निःशालूकमकारि शूकरगणैर्नामावशेषं सरो
हे पाथोद परोपकारक पयोदानेन मां पूरय ॥

( १३८ )

आगतिवदान्य पश्चात् सौधसम्पदमपि याचकेभ्य यथाशक्ति ददत् कश्चिद् दातारमभिलक्ष्य कस्यचित् कवेरुक्तिरियम् —

वातैः शीकरवर्षिभिः श्रुतिसुखैर्हंसावलीनिस्वने-
रच्छिद्रैः कमलैः पयोभिरमलैर्लीला जनान् निर्वृतिम् ।
पश्चात् चौधनां वहन्निजतनुं धन्यो मृणालोत्कला
दर्थिभ्यः प्रददच्चिन्दुविशदान्यस्थीनि पद्माकरः ॥

---

## सागरः ।

( १४० )

इत्यपकारमपि दुर्जनैः प्राप्तकाला सुजना उपकुर्वन्त्येवेत्याह —

यद्यपि बद्धः शैलै-
र्यद्यपि गिरिमथनमुषितसर्वस्वः ।
तदपि परभीतभूधर
रक्षाया दीक्षितो जलधिः ॥

( १४१ )

कतम्स्वपि बहुषु धनेषु यदि तैः परोपकारो न स्यात् तदा तानि विफलानीत्येवेत्याह —

मा कुरु गुरुतागर्वं
लघुरन्यो नास्ति सागर त्वत्तः ।
जलसंग्रहमन्यस्मात्
त्वयि सति कुर्वन्ति पोतस्थाः ॥

( १४२ )

कृतोपकारं जनं कथञ्चिन्नावमन्येतेत्याह :—

कल्लोलवेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि मकराकर मावमंस्थाः ।
किं कौस्तुभेन विदितं तव नाम नासीत्
प्राप्तुं प्रसारितकरः पुरुषोत्तमो यम् ॥

( १४३ )

धनलिप्सया राजान्तिकमुपागतस्य सपदि स राजानं विभ्रमविपद्व्याकुलं विलोकितवतो याचकस्योक्तिरियम् —

अयं वारां पूर्णो निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णाविचलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥

( मालवरुद्रस्य )

( १४४ )

कश्चिद्विद्वत्तमे कस्यचित् राज्ञः सकाशात् राजान्तरसन्निधि गन्तुमुद्यते प्रथमं राजानं प्रति कस्यचिदुक्तिरियम् —

निर्धौतपीनतिमिराणि मनोहराणि
रत्नानि सन्ति न कियन्ति तवान्तिकेषु ।
एतस्य कौस्तुभमणेर्व्रजतः परन्तु
पाथोनिधे स्मरणमान्तरमावहेथाः ॥

---

## सूर्य्यास्त-वर्णनम् ।

( १४५ )

दिशि दिशि विलसन्तः सन्ति खद्योतपोताः
प्रतिगृहमपि दीपा दर्शयन्ति प्रतिष्ठाम् ।
अधिगगनमनन्तास्तारका राजमानाः
सवितरि परिभूते किं न लोकेरलोकि ॥
( कृष्णकान्त विद्यावागीशस्

( १४६ )

ध्वान्तौघः कवलीकरोति जगतीं निर्व्वान्ति सूर्य्योपलाः
खद्योताश्च परिस्फुरन्ति सततं सीदन्ति पद्मान्यपि ।
ये तु ध्वाङ्क्षभिया स्वकोटरबहिर्निर्य्यान्ति नो कर्हिचित्
तेऽप्युच्चैर्विहरन्ति हा दिनमणे कुत्र त्वया प्रस्थितम् ॥

---

## निन्दा-प्रशंसा तरङ्गः ।

## (क) निन्दा-तरङ्गः ।

### असन्तोष-निन्दा ।

( १४७ )

कृष्णमाया शक्तिं दर्शयति —
कृष्णे कृष्णेऽपि ते शक्तिर्दृष्टा मर्त्त्येषु का कथा ।
त्रैलोक्यव्यापि यद् रूपं तत् त्वया वामनीकृतम् ॥

( १४८ )

तृष्णया बद्धमुक्तयोर्जगद्विलक्षण भेदवैचित्र्य दर्शयति —

तृष्णैवास्ति मनुष्याणां काचिदाश्चर्यशृङ्खला ।
प्रधावति यया बद्धो मुक्तस्तिष्ठति पङ्गुवत् ॥

---

## उदर-निन्दा ।

( १४९ )

राहो शिरोव्यतिरिक्त शरीर नास्तीत्य भिप्रायं आह —

एकः स एव जीवति
हृदयविहीनोऽपि सहृदयो राहुः ॥
यः सकललघिमकारण-
मुदरं न बिभर्त्ति दुष्पूरम् ॥

---

## ऋण-निन्दा ।

( १५० )

नहि ऋणमर्णं काल प्रतीक्षते इत्याह —

अन्तकोऽपि हि जन्तूनामन्तकालमपेक्षते ।
न कालनियमः कश्चिदुत्तमर्णस्य विद्यते ॥

---

## कलिकाल-निन्दा ।

( १५१ )

कलिकालीयस्वामिभक्तिविहीनानां नारीणां दोषान् दर्शयति —

भाषन्ते वनिताः कलौ प्रतिवचोऽप्रीतिप्रदं स्वामिन-
स्तासां यत् पतिदेवतेति वचनं षष्ठीसमासाश्रितम् ।
लज्जाधर्मभयं न तासु कतिचित् कार्य्ये यथेच्छं रता
नासावद्भगवोपमान् निजपतीन् कुर्वन्ति धन्यः कलिः ॥

---

## कापुरुष-निन्दा ।

( १५२ )

तेजस्विसकाशात् लब्धतेजसो जनस्य तेजः सोढुं न शक्यते इत्याह —

सह्यं तेजीयसां तेजस्तेन तेजीयसां न तु ।
मूर्ध्नि सह्यं रवेस्तेजः सिकता न पदे पुनः ॥

---

## कुकवि-निन्दा ।

( १५३ )

कुकविः सुकवेर्दोषं धत्ते यत्नैर्जहद् गुणम् ।
यत्नतः शर्करा हित्वा पुरीषमत्ति शूकरः ॥

( १५४ )

कवयः केवलकषयः
कीराः स्युः केवलं धीराः ।

वीराः पण्डितकवय-

स्तानवमन्ता तु केवलं गवयः ॥

---

## कुपुत्र-निन्दा ।

( १५५ )

शनैः शनैर्विनीयन्ते रोपणैस्तोयपोषैरपि ।

नवाम्रा इव कुशलैर्बालाश्चपलचेतसः ॥

( हरिहरस्य )

---

## कुवैद्य-निन्दा ।

( १५६ )

कुवैद्यो बहून् रोगिणो नाशयतीत्याह —

वैद्यनाथ नमस्तुभ्यं नाशिताशेषमानव ।

त्वयि विन्यस्तभारोऽयं सुप्तः स्वयमन्तकः ॥

---

## कुसंसर्ग-निन्दा ।

( १५७ )

मधुरप्यसतां सङ्गो नितरां हन्ति सद्गुणम् ।

गुणरूपान्तरं याति दुग्धं तक्रस्य बिन्दुना ॥

---

मूर्च्छोपन्नपिशूनसून् विजहतो दृष्ट्वा च भिक्षोरधे-
लूतातन्तुवितानसंवृतमुखो चुल्ली चिरं रोदिति ॥
( विक्रमादित्यस्य, केषाञ्चिन्मते दुर्गतस्य )

( १६६ )

काचिद् विदुषी रमणी धनोपार्जनाय प्रोषित स्वामिमुद्दिश्य आह :—

विकसामि रवावुदिते
सङ्कोचमुपैमि चास्तमुपयाते ।
दारिद्र्यसरसि मग्ना
पङ्कजलीलामनुभवामि ॥
( जयन्तीदेव्याः )

( १६७ )

दूये कान्ताकरं वीक्ष्य मणिकङ्कणवर्जितम् ।
अतःपरं परं दूये मणिकङ्कणवर्जितम् ॥
( जयन्तीदेव्याः )

( १६८ )

दग्धं खाण्डवमर्जुनेन बलिना दिव्यैर्द्रुमैः सेवितं
दग्धा वायुसुतेन रावणपुरी लङ्का पुनः स्वर्णभूः ।
दग्धः पञ्चशरः पिनाकपतिना तेनाप्ययुक्तं कृतं
दारिद्र्यं जनतापकारकमिदं केनापि दग्धं नहि ॥
( निम्यानारायणस्य )

## दुर्जन-निन्दा ।

( १६८ )

कर्णामृतं सूक्तिरसं विमुच्य
दोषेषु यत्नः सुमहान् खलस्य ।
अवेक्षते केलिवनं प्रविश्य
क्रमेलकः कण्टकजालमेव ॥

( बिल्हणस्य )

( १७० )

यस्य यः स्वभावः स कथमपि नापैतीत्याह —

सुनिष्णातोऽपि वेदान्ते साधुत्वं नैति दुर्जनः ।
चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥

( १७१ )

श्लेषमाश्रित्य खलानलयोः साम्यं दर्शयति .—

मित्रोदये म्लानिमुपैति सम्यग्
दोषागमे द्योतत एव नित्यम् ।
सम्बन्धमात्रेण दहत्यवश्यं
खलेऽनले वा कतरो विशेषः ॥

( १७२ )

खलानां परगुणासहिष्णुतामाह —

आविष्कृतान् परगुणान् कलयन्ति तूष्णीं
दुश्चेतसो ननु विदूषयितुं न रागात् ।
आकर्णयन्ति किल कोकिलकूजितानि
सन्धातुमेव निजसायकमाशु किराताः ॥

( १७३ )

याचकान् प्रति धनिनामाचरणमाह :—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः॥

## नारी-निन्दा।

( १७४ )

परं प्रचण्डा कटुवाक्यवादिनी
विवादशीला परगेहगामिनी।
मौखर्य्ययुक्ता च पतीष्टनाशिनी
त्यज्येत भार्य्या दशपुत्त्रपुत्त्रिणी॥

## निर्गुण-निन्दा।

( १७५ )

पूर्णोऽपि कुम्भो न करोति शब्दं
रिक्तो घटो घोषमुपैति घोरम्।
विद्वान् विनीतो न करोति गर्वं
बहूनि जल्पन्ति गुणैर्विहीनाः॥

## भिक्षा-निन्दा ।

( १७६ )

कदाचिदेको धनवान् कवि दैववशाद् दारिद्र्योपहतोऽपि मानभिया कस्यान्तिक गन्तु नैच्छत्। एवमेव यदा प्रार्थनाप्रयोजनं नितरामेव जात तदासौ कस्यचित् धनवत समीपमुपगम्य वक्ष्यमाणपद्येन स्वामवस्थां विज्ञापितवान् —

( क )

नवीनदीनभावस्य याचमानस्य मानिनः ।
वचोजीवितयोरासीत् पुरोनिःसरणे रणः ॥

सम्प्रति हीनावस्थोऽसौ धनाढ्य कवे श्लोकमाकर्ण्य श्लोकस्यैकस्य परिवर्तन माकाङ्क्षन् कौशलेनोक्तवान्, महात्मन् भवत श्लोको नितरामेव चारुतर किन्तु यदि तावदत्र दोषलेश मन्ये याचमानस्येत्यत्र च कार पतित, एतद्योगेनैव च मम अभिप्रायो भवता ज्ञातव्यो भवेत् एवमभिधाय वक्ष्यमाणप्रकारेण पठितवान् —

( ख )

नवीनदीनभावस्य याच्यमानस्य मानिनः ।
वचोजीवितयोरासीत् पुरोनिःसरणे रणः ॥

( १७७ )

मक्षिकासादृश्येन भिक्षुकान् निन्दति —

अनाहूताः स्वयं यान्ति रसास्वादविलोलुपाः ।
निवारिता न गच्छन्ति मक्षिका इव भिक्षुकाः ॥

( १७८ )

याचकमशकयो साद्दश्यं दर्शयति —

याचके मशके तुल्या वृत्तिः दृष्टिकृता कृता ।
प्रायः प्रहारभागित्वं क्वचिदाहारभागिता ॥

## भृत्य-निन्दा ।

( १७८ )

यतिभृत्ययोः साम्यं वैषम्यञ्च दर्शयति :—

भूशय्या ब्रह्मचर्य्यञ्च कृशत्वं लघुभोजनम् ।
सेवकस्य यतेः साम्यं पार्थक्यं पापधर्मजम् ॥

## मद्यपान-निन्दा ।

( १८० )

मद्यपस्य कुतः सत्यं दया मांसाशिनः कुतः ।
कामिनश्च कुतो विद्या निर्धनस्य कुतः सुखम् ॥

## मूर्ख-निन्दा ।

( १८१ )

हरेः पादाहतिः श्लाघ्या न श्लाघ्यं खररोहणम् ।
स्पर्द्धापि विदुषा युक्ता न युक्ता मूर्खमित्रता ॥

## पुत्त-निन्दा ।

( १८२ )

जायमानो हरेद् दारान् वर्द्धमानो हरेद् धनम् ।
म्रियमाणो हरेत् प्राणान् कथं पुत्तः सुखावहः ॥

## प्रेम-निन्दा ।

( १८३ )

अत्यन्तप्रेमसम्बन्धो न सुखाय कदाचन ।
अर्द्धनारीश्वरः शम्भुः प्रियावक्त्रं न वीक्षते ॥

---

## लोकवाद-निन्दा ।

( १८४ )

निरङ्कुशं जनाननमिति कथयति —

अर्थिनं याचकं रक्षाकर्त्तारं च जनार्दनम् ।
संहारकं शिवं वक्ति भुवि लोको निरङ्कुशः ॥

---

## लोभ-निन्दा ।

( १८५ )

किं दातुरखिलैर्दोषैः किं लुब्धस्याखिलैर्गुणैः ।
न लोभादधिको दोषो न दानादधिको गुणः ॥

( नीलकण्ठदीक्षितस्य )

---

## स्थानच्युति-निन्दा ।

( १८६ )

सिंहक्षुण्णकरीन्द्रकुम्भपतितं रक्ताक्तमुक्ताफलं
कान्तारे बदरीभ्रमाद् द्रुतमगाद् भिल्लस्य पत्नी मुदा ।
पाणिभ्यां परिगृह्य शुभ्रकठिनं तद् वीक्ष्य दूरे जहा-
वस्थाने पततामतीवमहतामेतादृशी दुर्गतिः ॥

---

## (ख) प्रशंसा-तरङ्गः ।

### उद्भट-कविता-प्रशंसा ।

( १८७ )

उद्भटकवितोत्कर्षं कथयति ।—

उद्भटश्लोकसद्द्रव्यसंग्रहं न करोति यः ।
प्रस्तावयज्ञसंप्राप्तौ कां स दास्यति दक्षिणाम् ॥

( १८८ )

उद्भटश्लोकसङ्गीतबाललीलाप्रकाशनैः ।
मनो न भिद्यते यस्य स योगी ह्यथवा पशुः ॥

( १८९ )

उद्भटाः कविताः प्राचां रसभावोद्भटाः पराः ।
सर्वदैव नवायन्ते न या सन्ति पुरातनाः ॥

( १८० )

यशो धर्म्मो नयो दाक्ष्यसुझटश्लोकवाग्मिता ।
एतेषां गुणरत्नानां संग्रही नावसीदति ॥

---

## उद्यम-प्रशंसा ।

( १८१ )

लभन्ते न विनोद्योगं प्राणिनः सम्पदां पदम् ।
अब्धिमन्थनजं दुःखं लब्धा देवाः सुधां पपुः ॥

---

## गुण-प्रशंसा ।

( १८२ )

गुणाः सर्वत्र पूज्यन्ते दूरेऽपि वसतां सताम् ।
केतकीगन्धमाघ्रातुं स्वयं गच्छन्ति षट्पदाः ॥

---

## गृहविशेष-प्रशंसा ।

( १८३ )

यदि रामा यदि च रमा
यदि तनयो विनयधीगुणोपेतः ।
तनयात् तनयोत्पत्तिः
सुरवरनगरे किमाधिक्यम् ॥

( १८४ )

श्लाघ्यं गृहस्थाश्रमं वर्णयति :—

सानन्दं सदनं सुताश्च सुधियः कान्ता मनोहारिणी
सन्मित्रं सुधनं स्वयोषिति मतिः सेवारताः सेवकाः ।
आतिथ्यं सुरपूजनं प्रतिदिनं मिष्टान्नपानं गृहे
साधोः सङ्ग उपासना च सततं धन्यो गृहस्थाश्रमः ॥

---

## दान-प्रशंसा ।

( १८५ )

वित्तत्यागयोर्योगं स्तौति :—

गुणो वित्तवतां त्यागो वित्तं त्यागवतां गुणः ।
परस्परवियुक्तौ तु वित्तत्यागौ विडम्बना ॥
( भट्टप्रद्युम्नस्य )

( १८६ )

तुरगशतसहस्रं गोगणानाञ्च लक्षं
कनकरजतपात्रं मेदिनीं सागरान्ताम् ।
विमलकुलवधूनां कोटिकन्याश्च दद्याद्
नहि नहि सममेतद् भक्तदानैः प्रधानैः ॥

---

## दाम्पत्यप्रेम-प्रशंसा ।

( १८७ )

आहत्य चिनुमः स्वर्गमपवर्गमपि क्रमात् ।
अनुकूले हि दाम्पत्ये प्रतिकूलं न किञ्चन ॥
( नीलकण्ठदीक्षितस्य )

---

## धन-प्रशंसा ।

( १८८ )

दुन्दुभिश्च सुतरामचेतन
स्तन्मुखादपि धनं धनं धनम् ।
इत्थमेव निनदः प्रवर्त्तते
चेतनो यदि जनः किमद्भुतम् ॥

---

## धर्म्म-प्रशंसा ।

( १८९ )

दुःखेनोपार्ज्यते धर्मः सुखेन तु विनाश्यते ।
कष्टलब्धमिमं त्यातुं नेच्छन्ति मुनयः सुखम् ॥
( नीलकण्ठदीक्षितस्य )

---

## धीर-प्रशंसा ।

( २००

आफलोदयकर्म्माणो हि धीरा इत्याह :—

रत्नैरमूल्यैस्तुतुषुर्न देवा
न भेजिरे भीमविषाद् विभीतिम् ।
सुधां विना न प्रययुर्विरामं
न निश्चितार्थाद् विरमन्ति धीराः ॥

---

## परिडत-प्रशंसा ।

( २०१ )

शून्यमापूर्णतामेति मृतश्चाप्यमृतायते ।
विपत् सम्पदिवाभाति विद्वज्जनसमागमात् ॥

( भट्टेन्दुराजस्य )

---

## परिच्छद-प्रशंसा ।

( २०२ )

वासः प्रसूतिः खलु योग्यतायाः
वासोविहीनं विजहाति लक्ष्मीः ।
पीताम्बरं वीक्ष्य ददौ तनूजां
दिगम्बरं वीक्ष्य विषं समुद्रः ॥

---

## परोपकार-प्रशंसा ।

( २०३ )

पिबन्ति नद्यः स्वयमेव नाम्भः
स्वयं न खादन्ति फलानि वृक्षाः ।
नादन्ति शस्यं खलु वारिवाहाः
परोपकाराय सतां विभूतिः ॥

---

## पौरुष-प्रशंसा ।

( २०४ )

किं जन्मना च महता पितृपौरुषेण
शक्त्यैव याति निजया पुरुषः प्रतिष्ठाम् ।
कुम्भोऽपि कूपमपि शोषयितुं न शक्तः
कुम्भोद्भवेन मुनिनाऽम्बुधिरेव पीतः ॥

---

## प्रार्थनाकौशल-प्रशंसा ।

( २०५ )

शब्दशास्त्रविदां चित्रमर्थाहरणकौशलम् ।
भवयेभ्योऽपि ये चार्थान् निष्कर्षन्ति सहस्रशः ॥

---

## प्रेम-प्रशंसा ।

( २०६ )

न खलु स्वकीयान् जनान् प्रति वैमुख्यमुचितं कदापि स्वामिन इत्याह :—

अन्तरायपरिग्रस्ता स्वीयमित्यनुकम्पया ।
दुर्दिनेऽपि दिनेशोऽयं प्रफुल्लयति पद्मिनीम् ॥

( २०७ )

आधारभेदादेकस्यापि आधेयस्य भिन्नतां दर्शयति :—

योऽन्यमुखे दुर्वादः
प्रियतमवदने स एव परिहासः ।
तरेन्धनजो धूमः
स एव चागुरुभवो धूपः ॥
( गोवर्द्धनाचार्यस्य )

---

## ब्राह्मण-प्रशंसा ।

( २०८ )

ऱं ब्राह्मणनौ राजन्नपूर्व्वेव भवार्णवे ।
न्त्यधःस्थिता लोका मज्जन्त्युपरिवर्त्तिनः ॥

---

## मधुरभाषित्व-प्रशंसा ।

( २०९ )

वाङ्माधुर्य्यात् सर्वलोकप्रियत्वं
वाक्पारुष्यात् सर्वलोकाप्रियत्वम् ।
किं वा लोके कोकिलेनोपनीतं
किं वा लोके गर्दभेनापनीतम् ॥

---

## मनस्वि-प्रशंसा ।

( २१० )

अनामा भूषणं धत्ते न कनिष्ठा न मध्यमा ।
निजनामप्रसिद्धानां भूषणैः किं प्रयोजनम् ।

---

## मानि-प्रशंसा ।

( २११ )

रिपव एव मानिनामभ्युदयनिदानमित्याह :—

श्रीरामस्य दशाननो न कृतवान् दारापहारं यदि
क्वाम्भोधिः क्व च सेतुबन्धघटना क्वोत्तीर्य लङ्काजयः ।
पार्थस्यापि पराजयं यदि रिपुर्नाधात् क्व तादृक् तपो
नीयन्ते रिपुभिः समुन्नतिपदं प्रायः परं मानिनः ॥

---

## यज्ञोपवीत-प्रशंसा ।

( २१२ )

परशुरामं प्रति रामचन्द्रस्योक्तिरियम् —

*भो ब्रह्मन् भवता समं न घटते संग्रामवार्त्ताऽपि नः*
सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्द्धनि ।
यस्मादेकगुणं शरासनमिदं राजन्यकानां बलं
युष्माकं द्विजजन्मनां नवगुणं यज्ञोपवीतं बलम् ॥

---

## विद्या-प्रशंसा ।

( २१३ )

न चौरहार्य्यं न च राजहार्य्यं
न भ्रातृभाज्यं न च भारभूतम् ।
व्ययेऽपि यद् वृद्धिमुपैति नित्यं
विद्याधनं तत् परमं धनेषु ॥

---

## विनय-प्रशंसा ।

( २१४ )

आदावेव विनीतः सन्नुपायं चिन्तयेत् सुधीः ।
पूर्वमेव क्षितौ नत्वा दन्तिनं हन्ति केशरी ॥

( कुसुमदेवस्य )

---

## श्यालकः-प्रशंसा ।

( २१५ )

भगिनीपतेरन्तिके श्यालकस्य आदरातिशय एव इत्याह —

गृहिणीसोदरस्येह गृहिण्या आदरः परः ।
कौस्तुभो हृदये नित्यं लक्ष्मीः पादतले हरेः ॥

---

## सन्तोष-प्रशंसा ।

( २१६ )

सन्तोषायत्तसिद्धिं गरीयसीत्याह —

अकृत्वा परसन्तापमप्राप्य नीचनम्रताम् ।
अनुत्सृज्य सतां मार्गं यत् स्वल्पमपि तद् बहु ॥

---

## सुकवि-प्रशंसा ।

( २१७ )

करीन्द्रश्च कवीन्द्रश्च भूभृत्तुष्टिकरावुभौ ।
उभावप्येकधर्माणौ भेदस्तु वयोस्तयोः ॥

( २१८ )

सुकवेरपि विपद् दर्शयति :—

अग्रे तार्किककेशरी प्रचलति क्रोधेन रक्तेक्षण:
पश्चाद् याति च शब्दचारुचतुर: कालापशार्दूलक: ।
तन्मध्ये कवितेकुरङ्गदयिते शक्तोऽपि चेज्जीवितुं
हारं रत्नमयं गले तव तदा दास्याम्यहं सादरम् ॥

---

## सुकाव्य-प्रशंसा ।

( २१९ )

श्लोको हि भवति श्लोको यत्र तिष्ठन्ति साधव: ।
लकारो लुप्यते यत्र यत्र तिष्ठन्त्यसाधव: ॥

( २२० )

सुधाकाव्यरसयो: पार्थक्यं न ज्ञातुं शक्यते इत्याह —

कान् पृच्छाम: सुरा: स्वर्गे निवसामो वयं भुवि ।
किं वा काव्यरस: स्वादु: किं वा स्वादीयसी सुधा ॥

---

## सुजन-प्रशंसा ।

( २२१ )

गङ्गा पापं शशी तापं दैन्यं कल्पतरुर्हरेत् ।
पापं तापञ्च दैन्यञ्च हरेत् साधुसमागम: ॥

( २२२ )

नवनीतविलक्षणं सज्जनहृदयमिति दर्शयति —

सज्जनस्य हृदयं नवनीतं
यद् वदन्ति कवयस्तदलीकम् ।
अन्यदेयविलसत्परितापात्
सज्जनो द्रवति नो नवनीतम् ॥

## सुपुत्त्र-प्रशंसा ।

( २२३ )

सत्कुलं भूषणं पुंसः सन्नार्या कुलभूषणम् ।
सत्पुत्त्रभूषणा भार्या पुत्त्राः सन्मतिभूषणाः ॥

( हरिहरस्य )

## सुवैद्य-प्रशंसा ।

( २२४ )

मस्ते दुःसहवेदनाकवलिते भग्ने स्वरेऽन्तर्गले
तसार्या ज्वरपावकेन च तनौ तान्ते हृषीकव्रजे ।
दूने बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः
कः शक्तः कलितामयप्रशमनाद् वैद्यात् परो विद्यते ॥

( वेङ्कटाध्वरिणः )

## सुसंसर्ग-प्रशंसा ।

( २२५ )

ज्ञानं वर्द्धयति श्रियं वितनुते वैदग्ध्यमासुष्यति
श्रेयः पल्लवयत्यघानि दलयत्युन्मीलयत्युन्नतिम् ।
बुद्धिं संपरिशोधयत्युपचिनोत्युच्चैः कलाकौशलं
किं किं नारभते हरेरिव कथायत्या सतां सङ्गतिः ॥

---

## रस-तरङ्गः ।

### अद्भुत-रसः ।

( २२६ )

कस्मै किं कथनीयं
कस्य मनःप्रत्ययो भवति ।
रमयति गोपवधूटी
कुञ्जकुटीरे परं ब्रह्म ॥

---

### करुण-रसः ।

( २२७ )

अग्रे व्याधः करधृतशरः पार्श्वतो जालमाला
पृष्ठे वह्निर्दहति नितरां सन्निधौ सारमेयाः ।

एषो गर्भादलसगमना श्रावके रुग्णपादा
चिन्ताविष्टा वदति हरिणं किं करोमि क्व यामि ॥
( सातलस्य )

---

## शान्तरसः ।

### अनित्यता ।

( २२८ )

संसारिणामविद्याजनितं भ्रमं दर्शयति —

जातोऽहं जनको ममैष जननी चेत्रं कलत्रं कुलं
पुत्रा मित्रमरातयो वसु गृहं भ्राता स्वसा बान्धवाः ।
संसारे शयने निमज्ज्य सुचिरं निद्रामविद्यामयीं
लब्ध्वा चित्त विघूर्णितं बहुविधान् स्वप्नानिमान् पश्यसि ॥
( कथामिश्रस्य )

---

### उपदेशः ।

( २२९ )

संसार तव निःसारपदवी न दवीयसी ।
अन्तरा दुस्तरा न स्यात् यदि रे मदिरेक्षणा ॥
( भर्तृहरिः )

## कर्म्मफलम् ।

( २३० )

महतामाश्रयः कार्य्यः फलं भाग्यानुसारतः ।
शिवस्य कण्ठलग्नोऽपि भुजगो वायुभक्षकः ॥
( भर्त्तृसारस्वतस्य )

---

## कालचरित्रम् ।

( २३१ )

धनं मे वसनं मे
जाया मे बन्धुवर्गो मे ।
इति मे मे कुर्व्वाणं
कालवृको हन्ति पुरुषाजम् ॥

---

## दैव-बलम् ।

( २३२ )

रामेण सीता कथिता त्वरस्व
सूर्य्येण तापैः परितापिताऽभूत् ।
पृष्ट्वापि विद्धा निजकण्टकैश्च
विधौ विरुद्धे स्वजनोऽपि शत्रुः ॥

---

## प्रार्थना ।

( २३३ )

शाम्भिकन्यालसत्कण्ठो मनःस्थालीमिलत्करः ।
त्रिपुरारिपुरद्वारि कदाऽहं मोक्षभिक्षुकः ॥

---

## विवेकः ।

( २३४ )

पुनःपुनर्भुवि क्षिप्तः पुनरेति स्वसन्निधिम् ।
मन्दकन्दुकवज्जातो मृत्योः क्रीडनकं नरः ॥

( लक्ष्मणस्य )

( २३५ )

तच्छायां परमां मन्ये यत् सुखं स्वजनादपि ।
निदाघवारणायाऽलं निजच्छाया न कस्यचित् ॥

---

## विषय-निन्दा ।

( २३६ )

न्यस्तं यथा मूर्ध्नि मुदाऽत्ति मेषो
दूर्वाक्षताद्यं बलिकल्पितः सन्
मृत्युं समीपस्थितमप्यजानन्
भुङ्क्ते मनुष्यो विषयांस्तथैव ॥

---

## हास्य-रसः ।

( २३७ )

निन्दाच्छलेन रामं स्तौति ।—

साधु साधु रघुनाथ यत् त्वया
पर्य्यणायि जनकस्य कन्यका ।
कार्य्यमेतदपरेण दुष्करं
युक्तमेतदजवंशजन्मनः ॥

---

## विविध-तरङ्गः ।

### आयव्ययौ ।

( २३८ )

इदमेव सुपाण्डित्यं चातुर्य्यमिदमेव च ।
इदमेव सुबुद्धित्वमायादल्पतरो व्ययः ॥

---

### उपनेत्रम् ।

( २३९ )

यो हि परमुखेन कस्यचिद् हस्तात्समवगम्य प्रयस्तं तं निन्दति निन्द्यं वा स्तौति तं प्रत्युक्तिरियम् ।—

दृश्यतेऽणुर्महत्त्वेन महानणुतया त्वया ।
दिव्यदृष्टेर्न दोषोऽयं दोषोऽयमुपचक्षुषः ॥

---

कण्टकः ।

( २४० )

सुमुखोऽपि सुवृत्तोऽपि सन्मार्गपतितोऽपि सन् ।
साधूनां पादलग्नोऽपि व्यथयत्येव कण्टकः ॥

---

कस्तूरी ।

( २४१ )

मयि वत गुरुगर्वं मा स्म कस्तूरि कार्षी-
रखिलपरिमलानां मौलिना सौरभेण ।
गिरिगहनगुहायां लीनमत्यन्तदीनं
स्वजनकमसुनैव प्राणहीनं करोषि ॥
( पण्डितराजजगन्नाथस्य )

---

कुम्भः ।

( २४२ )

दृढतरगलविनिबन्धः
कूपनिपातोऽपि कलश ते धन्यः ।
यज्जीवनदानैस्त्वं
सर्वामयं नृणां हरसि ॥

## गोपी-यन्त्रम् ।

( २४३ )

अलाबुतन्तुकाष्ठानां संयोगे मधुरध्वनिः ।
भिक्षापात्रं कटीसूत्रमिन्धनश्च पृथग् यदि ॥

---

## घटिका-यन्त्रम् ।

( २४४ )

कदाचित् महाराजकृष्णचन्द्रेण कवे कथय तावत् घटिकायन्त्रं रात्रिन्दिवं कथं ध्वनतीति पृष्टो वाणेश्वरविद्यालङ्कारस्तमुवाच —

अलभ्यं यदायुःपलः स्वर्णभारै-
रहो तस्य दण्डो वृथा याति यामः ।
दिनश्च त्रियामा प्रमादान्नराणा
मितीवानिशं घोषयन्ती घटीयम् ॥

( वाणेश्वर विद्यालङ्कारस्य )

---

## जिह्वा ।

( २४५ )

कौतुकीतद् यद् दन्तैर्न जिह्वा दश्यते इत्याह —

द्वात्रिंशद्दशनद्वेषिमध्ये भ्रमसि नित्यशः ।
तदिदं शिक्षितं केन जिह्वे सञ्चारकौशलम् ॥

---

## तमाखुः ।

( २४६ )

उक्तिप्रत्युक्ती :—

भ्रातः कस्त्वं तमाखुर्गमनमिह कुतो वारिधेः पूर्वपारात्
कस्य त्वं दण्डधारी नहि तव विदितं म्लेच्छराजस्य राज्ञः ।
चातुर्वर्ण्यं विधाता विविधविरचितं धर्मकर्मप्रभेद-
मेकीकर्त्तुं बलात् तन्निखिलजगति तच्छासनादागतोऽस्मि ॥

---

## तुलादण्डः ।

( २४७ )

गुरुषु मिलितेषु शिरसा
प्रणमसि लघुषून्नता समेषु समा ।
उचितज्ञासि तुले किं
तुलयसि गुञ्जाफलैः कनकम् ॥

---

## दुग्धम् ।

( २४८ )

सहजमाधुर्यं न कथमपि विचलतीत्याह :—

को हि तुलामधिरोहति
शुचिना दुग्धेन सहजमधुरेण ।
तप्तं विकृतं मथितं
तथापि यत् स्नेहमुद्गिरति ॥

---

## धनुर्वाणौ ।

( २४८ )

कोटिद्वयस्य लाभेऽपि नतं सद्वंशजं धनुः ।
असद्वंश्यः शरः स्तब्धो लक्षलाभाभिकाङ्क्षया ॥

---

## धूमः ।

( २५० )

धूमः पयोधरपदं कथमप्यवाप्य
वर्षाम्बुभिः शमयति ज्वलनस्य तेजः ।
दैवादवाप्य ननु नीचजनः प्रतिष्ठां
प्रायः स्वबन्धुजनमेव तिरस्करोति ॥

---

## नखरञ्जनी ।

( २५१ )

शब्दश्लेषलोलुप कविरुत्तमाधमयोरभेदं दर्शयति :—

अनन्तचरणोपान्तचारिणी मलहारिणी ।
पुनर्भवच्छेदकरी गङ्गेव नखरञ्जनी ॥
( वाणीश्वर विद्यालङ्कारस्य )

---

## नस्यम् ।

( २५२ )

नस्यं भूसुरसूरिसेवितमलं नस्यं सुसेवे स्वयं
नस्येनैव विकाश्यते कविकुलं नस्याय तस्मै नमः ।
नस्यात् श्रेष्ठतरं न चास्ति भुवने नस्यस्य यशोऽस्म्यहं
नस्ये मे नियतं विराजतु मनो हे नस्य मामुद्धर ॥

( उद्भटसागरस्य )

---

## नौका ।

( २५३ )

नौका च खलजिह्वा च प्रतिकूलप्रवर्त्तिनी ।
प्रतारणाय लोकानां दारुणा केन निर्मिता ॥

---

## प्रदीपः ।

( २५४ )

( क )

प्रदीपं लक्ष्यीकृत्य उपदिशति —

रस पात्रगतं स्नेहं दीप स्वश्रीविवर्द्धनम् ।
प्रयास्यसि विना तेन भस्मत्वं भवतो गुणाः ॥

( महादेवस्य )

( ख )

आश्रितमात्रस्य शत्रोरपि हृदयमधिकरोतीत्याह —

हन्याद् द्विपमविनीतं
किन्तु न शरणागतं द्विपं हन्यात् ।
दीपस्तिमिरविनाशी
दलयति नाधोगतं तिमिरम् ।

---

## बडिशदण्डः ।

( २५५ )

यत् सद्गुणोऽपि सरलोऽपि तटस्थितोऽपि
वंशोद्भवोऽपि विदधासि नृशंसकर्म ।
यन्नात्मनो बडिशदण्ड तदेव तस्य
जानामि सङ्गतिफलं तव कण्टकस्य ॥

---

## मध्यस्थः ।

( २५६ )

जलस्य वह्निना वैरं विधात्रा परिकल्पितम् ।
सुपात्रं यदि मध्यस्थं नृणां भोगाय कल्पते ॥

---

## विधि-विड़म्बनम् ।

( २५७ )

पृष्ठेन कुब्जश्चरणेन खञ्जो
　　नेत्रेण काणो रसनेन मूकः ।
कायेन खर्व्वः श्रवणेन चैड़ो
　　नसाऽवनाटो विधिवञ्चितो यः ॥

( उद्भटसागरस्य )

—— •

## विवाह-पणः ।

( २५८ )

कन्यायै रोचते रूपं माते च मोदते धनम् ।
तताय स्वदते शास्त्रं वरस्योपयमोत्सवे ॥

( उद्भटसागरस्य ).

——

## सुजन-दुर्जन-पार्थक्यम् ।

( २५९ )

( क )

आकोपितोऽपि सुजनो मधुरं हि रौति
　　निष्पीड़ितो मधुरमुद्गिरते यथेक्षुः ।
नीचो जनो गुणशतैरपि पूज्यमानो
　　हास्येन यद् वदति तत् कलहेऽप्यवाच्यम् ॥

( ख )

सरलयोः खलु सख्यमनारतं
कुटिलयोर्घटनैव न जायते।
यदि भवेत् सरले कुटिले तदा
न चिरमस्ति धनुःशरयोरिव ॥

---

## स्वभावाख्यानम् ।

( २६० )

साधुरेव न जहाति साधुतां
दुर्ज्जनेन सह सम्मिलन्नपि।
जन्मतः प्रभृति काकसङ्गतः
पश्य रौति मधुरं हि कोकिलः ॥

---

इति द्वितीय-प्रवाहः समाप्तः ।

---

# परिशिष्टम् ।

## द्वितीय-प्रवाहः।

## टिप्पनी ।

(१) ब्रह्माभिधेय—परब्रह्मसंज्ञकम्। महः—ज्योतिः। एते व्याधिग्रस्तादयो यथा दुःखनिवृत्त्यै वैद्यादीन् स्मरन्ति तथाऽहमपि आत्यन्तिकदुःखान्धकारदूरीकरणाय एकं शरण्यं तमत्र स्मरामीत्यर्थः।

(२) कुलशैलदल—कुलशैला अष्टकुलपर्वता एव दलानि पत्राणि यस्य तत्। पूर्णम्—अखण्डम्। सुवर्णगिरिकर्णिक—सुवर्णगिरिः सुमेरुरेव कर्णिका बीजकोषो यस्य तत्। अनन्तनाल—अनन्तः विष्णुः एव नालं यस्य तत्। कमलविष्टरम्—पद्मासनम्।

(३) स्फाटिकीं—स्फटिकमयीम्। अक्षमालां—जपमालाम्। नखकिरण-विमिश्राम्—करतलरश्मिमिश्राम्। प्रतिपल—प्रतिक्षणम्। कीर—शुकपक्षी। मूल्ये—मङ्गलाय।

(४) वृत्ति—वर्त्तनं व्यवहारादिकमित्यर्थः। स्वतन्त्रा—स्वाधीना। स्नुषाणाम्—पुत्रवधूनाम्। सरस्वती ब्रह्मणः पत्नी, विष्णोर्नाभिकमलात् जात इति विष्णुर्ब्रह्मणः पिता लक्ष्मीश्च माता। अतएव लक्ष्मीः सरस्वत्याः श्वश्रूरिति सङ्गच्छते। पण्डितोऽपि निर्धनो नाद्रियते इति श्लोकार्थः।

(५) अलक्ष्मीरेव पलायते अपगता भवति। लक्ष्मीश्चापि न अपलायते चञ्चला न भवति।

(६) खरतरशरहतसुरपरमथन—सुशाणितशरैः हतं सुरपराणां सुरवैरिणाम् असुराणां मथनं येन तत्सम्बोधने। "अतिधातिपरारातिप्रत्यर्थिपरिपन्थिनः"—इत्यमरः। खगचर—गरुडयान। नगधर—गोवर्द्धनगिरिधारिन्। फणधरशयन—शेषशय। परपदलयकर—मोक्षपददायक। भवदरमथन—भवभयनाशक। जगदघम् अपहर—जगतः समस्तं पापं दूरीकुरु त्वमिति शेषः। सरसिजनयन—पद्मनेत्र।

(९) नाथे—स्वामिनि नारायणे इत्यर्थः । क्षतपदघात भृगुमुनिरित्यर्थः । चुलुकिततात—चुलुकित गण्डूषेण पीतः तातः पिता समुद्रः येन स अगस्त्य इत्यर्थः । कमलिकासेवी—सरस्वतीसेवक पण्डित इत्यर्थः ।

(१०) विष्णोरुरसि—नारायणस्य वक्षःस्थले । कुम्भसम्भवमुनिः—अगस्त्य । ताते पितरि समुद्रमित्यर्थः ।

(११) लक्ष्मीर्यौवनम् सदया तावत् भवन, वधू सुख पौरुषान्वितत्वम्, जनादर, एतानि सुलभानि भवन्ति । चेत् सा न तथा कृपावती तदा एतेषां पदानां प्रथमवर्णे परित्यागे यत् भवति तदेव स्यात् । वनम् अरण्यं धू भार सकलमेव कष्टकरम् खम् आकाश सर्वं शून्यम् रुषान्वितत्वम् क्रोधपूर्णदृष्टि नादर सर्वत्र सम्मानाभाव ।

(१२) द्रविण—धनम् । मत्सर—विद्वेष । मत्सरिणी—विद्वेषकारिणी

(१३) कन्धरा—ग्रीवाम् शेष—हे अनन्त ।

(१५) राजमणि—राजश्रेष्ठ । रमेश—रमाया ईश पति नारायणमित्यर्थः । निशाचरचमू—राक्षससैन्यानि । शुभायन शुभ मङ्गलदायकं अयन आश्रय ।

(१६) दारुदृषदम्—"जातिरप्राणिनाम्" इति द्वन्द्वैकवद्भाव, "द्वन्द्वाच्चुदषहान्तात् समाहारे" इति समासान्तष्टच् ।

(१८) स्वरोचिषा—निजकिरणेन । अलङ्करोति—प्रकाशयति । तदन्वये—तद्वंशे सूर्यकुले इत्यर्थः दिग्शताङ्ग—दिक् दशपूर्वं शताङ्ग रथ दशरथ इत्यर्थः । एकराट्—एकाधिपति । स्वरविगमे—स्वरयोर्वैपरीत्येन रहणे

(२०) ताताज्ञया—पित्रादेशेन । तात—वत्स । व्याजेन—छलेन । पुरःसरन्तु—पुरःसराः अग्रगामिनः अनुचरा इति आचरन्तु क्विबन्तनामधातो रूपम् ।

(२१) सिता—शर्करा । अपविद्या—अविद्या अज्ञानता इत्यर्थः । "देहोऽहमिति या बुद्धिरविद्या सा प्रकीर्त्तिता" । रोचिका—रुचिकरी ।

(२४) अरुण—सूर्य तत्समानवर्णत्वादेव कृष्णपदतलमित्यर्थः । विधुपाली—चन्द्रश्रेणी नखाकारत्वादेव कृष्णपदनखपङ्क्तिरित्यर्थः । तमःस्तोम—अन्धकारराशि अत्र कृष्णस्य चरणोपरिभाग । एते परस्परं शत्रुभावापन्ना अपि कृष्णचरणमाश्रित्य सहवसन्ति । शात्रवम्—शत्रुता ।

(२६) भूमिका—कृमिकीटपतङ्गादिरूपान्तरपरिग्रहरूपा । श्रीमाताभक्तवत्सा अराविवसव—अष्टस्य वामगत्या चतुरशीतिलक्षसंख्यका ( ८४००००० ) भूमिका इत्यर्थः । मानय—मा आनय ।

(२८) सेवति—वोपदेवमते सेवधातुरुभयपदी।

(३३) हरि हरीति—खेदसूचकमव्ययम्।

(३५) तनूरुहकुहरे—लोमकूपे। नटन—नर्त्तनम्। तमिभ—श्रीकृष्णमिति शेष

(३६) गुणवत् गुणविशिष्ट चेत। अगुण—सौन्दर्य्यादिगुणरहितम् अङ्गम्।

(३७) औत्पातिकम्—अमङ्गलम्। कादम्बरी—मद्यविशेष। लाङ्गलधृत—हलिन बलरामस्य इत्यर्थं।

(४०) को पृथिव्यां कोऽपि अपूर्व्व कापालिक कपालपाणि कश्चित् देव शिव इत्यर्थ कुशलं कलयतु। कल्पान्ते प्रलये क्रूर संहारकारक केलि क्रीडा यस्य स। क्रतुकदनकर—यज्ञ नाशक। कलित स्वीकृत कुमुदिनीकामुक चन्द्र येन स। कलित कङ्कालक्रीडनोत्क—कङ्काले अस्थिभि क्रीडने खेलायां उत्क उत्सुक। कलकल—कलिता अवलम्बिता कलेन मधुरास्फुटध्वनिना कला नृत्यगीतवाद्यादिरूपा येन स, अथवा कलित गृहीत कलकल कोलाहलो येन। काली कृष्णवर्णा काली कलत्र यस्य तादृश। कालिन्दीव काल कृष्ण कण्ठो यस्य स।

(४१) दोषाकर—चन्द्र पक्षे दोषाणामाकर। द्विजिह्व—सर्पः, पक्षे द्विभाषी। पाषाणजा—पार्व्वती, पक्षे कठिनहृदया। पशु—वृष। अन्तरङ्ग—आत्मीय प्रिय इत्यर्थ।

(४५) धूर्ज्जटिमूर्द्धनि—शिवमस्तके। मध्यस्था—मध्यदेशवर्त्तिनी पक्षे विवाद नाशिनी। वैधवी—विधुसम्बन्धिनी। मिलनात्—कुलचन्द्रमते मिलधातो पाक्षिक कुटादित्वात् मिलन मेलनमिति रूपद्वयसिद्धि। तथाच—'महापातकिम पञ्च मिलितव्य न ते सह'—इति शिष्टप्रयोग।

(४६) मृडम्—महादेवम्। उडपरिवृढचूडम्—उडूनां नक्षत्राणां परिवृढ अधिपति चन्द्र इत्यर्थ स एव चूडायां यस्य तम्।

(४७) विषमनयना—त्रिनेत्रा वक्रदृष्टिश्च। कपिवरमुख—नन्दी, तस्य वानरवन्मुखमिति प्रसिद्धि'।

(४९) उज्झित्वा—त्यक्त्वा। वास—वस्त्रम्। पितृवने—श्मशाने। वास रसं—वसतिसुखम्। श्रीखण्डसारद्रवे—चन्दनरसे।

(५०) सीमन्तिनी—सीमन्त केशविन्यास, सोऽस्या अस्तीति सीमन्तिनी रमणी। त्रिलोकरक्षा—त्रयावयवो लोकस्त्रिलोक इति शाकपार्थिवादित्वात् समास, तस्य रक्षा

ताम्, अथवा त्रयाणां लोकानां रक्षा तामिति उत्तरपदे परे द्विगु । कपालपाणिः —कपाल, भिक्षाभाजनं पाणौ यस्य तादृशं सन् । ललाटलेख.—विधिकृता ललाटलिपिः । न पुनः प्रयाति—अन्यथा सन् न याति, अन्यथा न भवतीत्यर्थ ।

(५३) दण्डी—कालः । एते सदैव त्वां रक्षन्ति ।

(५४) ह्रीरूपा—लज्जारूपा । दिगम्बरा—नग्ना । क्रमते—पादेनाक्रामति । "अनुपसर्गाद्वा," इति पाक्षिकमात्मनेपदम् ।

(५५) अखिलेषु गलेषु—पञ्चवक्त्रत्वात् पञ्चसु कण्ठेषु । हिमशैलजा—हिमालयजाता दुर्गा । लीलया—विलासेन ।

(५६) कालकूटकवलज्वालानां अपनुत्त्यै अपनोदनाय । तत्—अह्नि फुल्लकमलम् ।

(५७) स्वर्गौकसां—देवानाम् । स्तुतिगिरा—स्तोत्रवाक्येन । संत्रासमुक्तवसना —सत्रासे मुक्तं वसनं यया तादृशी ।

(५८) विधेः कुण्ड्या—ब्रह्मणः कमण्डलुमध्ये । गर्भाग्निविध्वंसिनी—मुक्तिदायिनी ।

(६२) गन्ध.—लेश । एषा व्याघ्री यं पश्यति तस्य जन्मान्तरपरिग्रहेण देहसम्बन्धो न भवति, तदस्याः शिवरूपत्वमिति ।

(६३) जीवन—जलम्, पक्षे प्राणाम् ।

(६६) विहगपुङ्गवपुङ्गववाहन—विहग पुङ्गव इव विहगपुङ्गव खगश्रेष्ठो गरुडः, पुमान् गौ पुङ्गवो वृषश्च तौ वाहने यस्य तत् । मकरकुण्डलि—मकराकृति कुण्डलधारि । कुण्डलिकुण्डलि—कुण्डली सर्पः स एव कुण्डलं, तद्विशिष्टम् । चन्द्रकिचन्द्रकि—चन्द्रकिन मयूरस्य चन्द्रक पुच्छमिति यावत्, तद्विशिष्टम् । चन्द्रकि—चन्द्रकश्चन्द्र, सोऽस्यास्तीति, चन्द्रशोभितमित्यर्थः ।

(६७) अम्ब—मातः । रन्तु—क्रीडितुम् । सुपर्णी—बलराम । व्यादेहि— —विस्तृत कुरु आननमिति शेष ।

(६८) विधुरा—कातरा । जलनिधि—जलधि । गिरीश—हिमालय शिवश्च । प्रोन्मीलेत्यादि—प्रकर्षेण उन्मीलत् यत् स्मितं तेन मुग्धं मनोहरं ( लज्जया ) नम्रञ्च वदनं यस्याः सा तयोक्ता ।

(६९) त्रिपादे—त्रिसंख्यकाः पादा ते ।

(७०) किं तवासौ बभाषे—असौ तातः किं कथं तव बभाषे उक्तवान् ।

(७१) वारिदसम्भ्रमात्—मेघभ्रान्त्या। ग्रहमित्यादि राधाया उक्ति। तक्रं—तक्र 'घोल' इति भाषा।

(७२) कुम्भीश —करीन्द्र। हरिमध्यकम्—सिंहकटिदेश। विधिक्रमम्—मम एतत् सर्व्वं विधात्रा निर्म्मितं तत्र मे को दोष इति भाव।

(७३) पण्यवीथिका—विपणिम्। नन्दगोपगृहस्थितां पण्यवीथिकाम्, पक्षे नन्दगोपगृहमेव पण्यवीथिकाम्। आलि—सखि। उज्ज्वलगुण—गुण सूत्रम्, पक्षे दयादाक्षिण्यादिगुण। केशबन्धनं—केशबन्धनसाधनं केशनिर्म्मितं डोरकम्, पक्षे केशव क्षणदर्प धनम्।

(७४) लक्ष्मीरुवाच—कस्त्वम्। नारायण प्रत्युवाच—चक्री सुदर्शनचक्रधारी अहम्। कुम्भकारोऽपि चक्रीत्युच्यते, तथाच मेदिनी चक्री तैलिकभित्कोक कुलालग्राहिसूचके" इति, इत्येतमय घटयित्वा लक्ष्मीरुवाच—मम घटाद्यार्थता घटादिभि प्रयोजनमित्यर्थ नहि न विद्यते। एवमर्थान्तर शङ्खादिपदेष्वपि ज्ञेयम्। तत्र अर्थान्तरमाकलय्यैव लक्ष्म्या उक्तिपरम्परा। शङ्खी—पाञ्चजन्यनामकशङ्खधारी, पक्षे नरशिरोऽस्थिधारी। आशवम्—अमङ्गलम्, शवास्थिधारी अशुचिरमङ्गलश्च इति भाव, पक्ष शिवादन्यम् नरकपालधारो सन्नपि शिव एव परमं शुचि, तदन्य सर्व्वं अशुचिरिति भाव। गदी—कौमोदकीनामकगदाधारी पक्षे गदी रोगीऽस्यास्तीति गदी। खड्गी—नन्दकनामकखड्गधारी, पक्षे गण्डक 'गण्डार' इति भाषा ( गण्डका हि, प्राय पुष्करिण्यादौ सम्प्रतिष्ठन्ति )। पद्मी—पद्मधारी, पक्षे हस्ती। तर्हेहि—तदा इहि गच्छ, पक्षे तत् तदा वा एहि आगच्छ। पद्माकरम्—तडागम् ( हस्तिनो हि प्राय तडागादौ जलक्रीडां कुर्वन्ति मृणालादिक भक्षयन्ति च ), पक्षे पद्माया लक्ष्म्या कर पाणिम्। प्रापत्—धृतवानित्यर्थ।

(७७) भिक्षु—शिव त्रिपादपरिमितभूमिप्रार्थी वामनश्च। मखे—बलेर्यज्ञे। पशुपति—शिव, गोपालक कृष्णश्च। पन्नगभूषण—सर्पवेष्टित शिव, पक्षे सर्पोपरि शयान विष्णु। शेते स शेषोपरि—विष्णोरनन्तशय्या प्रसिद्धैव। विषाद—विषभक्षक शिवम्, दुःखश्च।

(७८) गङ्गाधरपवि—सपत्नीविशिष्टे। सापि स्वामिनस्तव शिरसि वर्त्तते इति अभिप्राय। चक्रिवधु—चक्रिण विष्णो हलनामिग्रस्येति अभिसन्धानम्। नर्त्तन—शिवस्य ताण्डवं प्रसिद्धम्। सर्पकुतुकी शिवस्य सर्पभूषणत्वात् विष्णोश्च काश्चित्

नियाहकलात्। विषादी—विष गरलम् अस्तीति गरलपायी। वक्षी—पूतना तस्या विषलिप्त स्तनं स्तन्य पयौ।

(८०) मौली—मस्तके। मौलिल्यादि—अलकायूर्णकुन्तला, वेणिका—विन्यस्त केशपाश, अलकासहिता वेणिका, पयान्नीला अलकवेणिका मौलालकवेणिका। वीथिका—तरङ्ग। शफरी—मत्स्यविशेषी। रथाङ्गद्वय—चक्रवाकयुगलम्।

(८१) पार्वती प्राह हे अन्धकारे अन्धकस्य तन्नामकासुरस्य अरि' शिव तत् सम्बुद्धि मूर्ध्नि द्वय का। मूर्ध्नि अन्धकारे तमसि इयं का इत्येव पार्वतीप्रश्नार्थं घटयित्वा शिवेनोक्त हे सुभ्रु कान्त सुन्दर इन्दु तेन युक्ते इह मूर्ध्नि तिमिर कुत नास्त्येव तिमिरमित्यर्थं। पार्वती तु कान्तेन्दुयुक्ते इत्यस्य कान्ता च इन्दुश्च ताभ्या युक्त तस्मिन् मूर्ध्नि इत्ययमाकलय्याह कान्तेत्यादि, अपि प्रश्ने अत्र शिरसि काचित् कान्ताऽस्ति। ननु भवतु—एवमितिशेष, ननुशब्दोऽत्र आक्षेपे। एतावदेव—केयं कान्ता इत्येव। अन्द — कान्तेन्दुयुक्ते इति पदे इन्द्वसमासम्, पक्षे तया सह कलहम्। अपनय—दूरीकुरु। प्रतिवचनजित —प्रत्युत्तरदाने पराभूत।

(८२) पशुपति —शिव पक्षे पशूनां राजा। हरि —सिंह। देवीमापति — देव उमापति शिव अहमिति शेष एवं परत पक्षे देव मापति मा लक्ष्मीस्तस्या पति विष्णु। शूली—शिव, पक्षे शूलरोगाक्रान्त। भीम —महारकर्ता शिव, पक्षे द्वितीयपाण्डव। तत्परिहासेत्यादि—तस्या पार्वत्या परिहासक्रीडाच्छलेन। मुग्ध हतबुद्धि प्रतिवक्तुमक्षम इत्यर्थ।

(८३) इदं—भिक्षुरत्नम्। निःस्नेहा—प्रेमशून्या। अक्षयकर —करीषकर्कश। स्नेह—तैलादिद्रववस्तु। विन्दति—लभते। निष्फल —अकारण। स्थाणो — शिवस्य, पक्षे शाखादिरहितद्रुमस्य।

(८४) शूली—शिव शूलरोगी च। मगयेति अदन्तचुरादिमगधाती परस्मै पदित्वाभावात् अन्वेषणार्थंमगशब्दात् करोत्यर्थे णिचि मगाति नामधातोर्लोटि रूपम्। नीलकण्ठ —शिव मयूरश्च। पशुपति —शिव सिंहश्च। स्थाणु —शिव निःशाख द्रुमश्च। शिवाया —पार्वत्या शृगाल्याश्च। जीवितेश —पति। हतवचा — निर्वाक्।

(८५) ज्वलनात्—अग्नेः। वैश्रवणात्—कुबेरात्। रामजनार्दनाभ्यां— परशुरामनारायणाभ्याम्।

(९०) खड्गिभि—खड्गधारिभि रक्षकै, पक्षे गण्डकै। गजै—हस्तिभि, पक्षे वानरविशेषै। कञ्चुकिभि—अन्त पुरचारिभि, कार्य्यकुशलवृद्धविप्रै द्वारपालैर्वा, पक्षे सर्पै। महिषीभि—कृताभिषेकाभि रमणीभि, पक्षे महिषस्त्रीभि। त्वरिद्विधा मन्दिरे शून्येऽपि सतीत्यन्वय।

(९१) तिमिरारि—सूर्य्य। शङ्कितमानसा—अस्माकञ्च तिमिरवर्णतया यथास्मानपि हन्यादिति भीतचित्ता। रटन्ति—शब्दायन्ते। प्रगे (अव्ययम्)—प्रत्यूषे। द्विका—काका।

(९३) पलायनं—उड्डयमपलायनमवलम्बनम्। गिर—वाच। ध्वाङ्क्ष—काक। उद्घाटयन्—अभिनयन् अनुकुर्व्वन्नित्यर्थ।

(९४) कुहूम्—नष्टेन्दुकलाम् अमावस्याम्। सा दृष्टेन्दु सिनीवाली सा नष्टेन्दुकला कुहू इत्यमर (सा अमावस्या)। आध्यति—शब्दश्च कुर्व्वति सति। गूढपुरुषा—चरा। सम्भ्रमात्—त्वरया। त्वराधशत अत अत इत इत इत्यतानि पदानि अनुस्मार्य्य केवलं कुहू कुहूरिति भाव।

(९५) चक्रवाकमिथुनं रात्रौ एकत्र न वसतीति प्रसिद्धि।

(९६) कवलितं—भुक्तम्। कन्दलं—नवाङ्कुर। कुमुदकोषे—कुमुदकुसुमाभ्यन्तरे। सहचरपरिमुक्ता—चक्रवाकविरहिता।

(९७) जीवनेन—जीविकया जलेन च। कौलक्रमोच्छेदप्रसङ्ग—वंशपरम्परागतनियमभङ्गप्रसक्ति। परद्रु सह—अतिक्लेशकर। अतएव चातक आषाढ्येऽपि वृष्टिजलं विना नान्यज्जलं पिबतीति भाव।

(१००) जानीते—अभ्योनिवेशनाभीर्य्यमिति शेष। कोलावतार—वराहावतार।

(१०१) कर्दमपानीयं—कर्दममिश्रं पानीयमिति मध्यपदलोपी कर्म्मधारय समास। मकमकायते—मकमकेति शब्दं करोति अकर्म्मकमिति शेष। "अव्यक्तानुकरणाद्" इत्यादिना मकमकशब्दात् डाच्, द्वित्वञ्च सतो 'लोहितादिडाज्भ्य क्यष्' इति क्यष्।

(१०३) मङ्गाक—मण्डाकसम्पातात्। वार्द—सीत्कारे। दर्दुर—भेक।

(१०५) केकिवर—मयूरराज। गोपालमौलिमुकुटे—श्रीकृष्णस्य मस्तकस्थे मुकुटे।

(१०६) केका—मयूरस्य कण्ठरव। कबरी—केशपाश केशविन्यास। कलापा—मयूरपुच्छानि। जिह्मग—सर्प। पिपिते—मारे —— मनसि स्थितम् अभिलषितमिति यावत्।

(१०७) एतत्—पूर्वोक्त वचनम्। सचिन्त्य ससम्भ्रमात्—अतित्वरया स्मृत्वा इत्य। श्लोकेन भूयसोऽभिधानं संक्षेप। के का इति वचनेनैव निर्दोषदित्यादि वचनानामपि अभिधानं भवतीत्यर्थ। उन्नतशिर—ऊर्ध्वीकृतमस्तक सन्। केका—"केका वाणी मयूरस्य" त्यमर। रुषा—क्रोधेन। वर्षासु पतिप्रवीनां विरह अनुचित इति भाव।

(१०९) सिंहिका—सिंही, पक्षे राहुमाता। साश्रय—आश्रयचन्द्रेण सहितम्।

(११०) प्रत्याशम्—प्रतिदिशम्। प्रतिपद्धति—प्रतिपथम्। अभ्युर्यमाण—गर्हितं चरन्। अध्वगान्—पान्थान्। फेरव—हे शृगाल।

(१११) मलयजवर्णे—चन्दनवृक्षसमूहे। सुन्निर्वाह—सुखाशान्ति। प्रयत पवने—विशुद्धवायुभि। आशीविष—सर्पं। आशिषि आस्यां वा दंष्ट्रायां विष यस्येति व्युत्पत्ति।

(११२) एण—हरिण। द्वीपी—व्याघ्र। क्रोष्टा—शृगाल। वल्गति—प्लवेन गच्छति। रुरु—मृगविशेष। करिपोतके—हस्तिशावके।

(११३) नीरजराजित—पद्मसुशोभितम्। मानस—चित्त, पक्षे मानस नामक सरोवर।

(११४) विकचपङ्कजालिस्खलत्परागधवलीकृते—विकसितपद्मसमूहेभ्य पतत् पुष्पपरागै शुभ्रीकृते। विवदने—विमुखे। विधौ—विधातरि।

(११६) दानार्थिन—मत्तहस्तिनो गण्डमि सृतं मदजलं पिपासव। मदान्ध बुद्ध्या—मदेन अन्धा सदसद्विवेकहीना या बुद्धिस्तया। अनेन भङ्गदूरीकरणेन करिवरस्येव अतिनं पुनर्भृङ्गाणां, यतस्ते हस्तिमदवत् कमलमकरन्दमपि पिबन्ति। एकस्मिन् द्वारे बद्धे शत द्वाराण्युद्घाटितानि सन्ति याचकानामिति भाव।

(११७) दलसन्दोहे—पत्रसमूहे। कुजन्मन—कुत्सितं जन्म यस्य स तस्य, पक्षे को पृथिव्यां जन्म यस्य तस्य। कुपुरुषस्य यथा कुजन्मतरोरपीति श्लेष।

(११८) अनेकपतित—अस्थानपतित। मरुभुव—मरुमार्गस्य।

(१२४) गिलिताकाशा—गिलितं स्पृष्ट इत्यर्थ आकाशो येन्ते गगनस्पर्शिन। जनताचेतोनन्दन—जनसमूहस्य चित्तानन्ददायक।

(१२५) तर्पिता—प्रीणिता। वासिता—सुरभीकृता। अपहातु—परि हर्तुम्। ईहते—चेष्टते। क्षुत्—क्षुधा। न लगति—न प्राप्नोति। फलाभावात् —ां निवारयितुमसमर्थ क्षुधार्त्तरगत्या परित्यक्ष्यसि न तु स्वेच्छयेति भाव।

(१२६) जगत्प्राण—वायु। जीवन—जलं पक्षे यमदूतिका—यमालयप्रापिका, पक्षे तिन्तिडी।

(१२७) अतिमाधुर्य्येण जितपीयूषस्य पनसस्य कण्टकिफलस्य। मातुलपुष्पकस्य—धुस्तूरपुष्पस्य।

(१२९) तरलीभवन्ति—आलोकदानाय समन्तात् सञ्चरन्ति। कोक—चक्रवाक। शोक—चक्रवाकीविच्छेददुःखम्। हृष्टमनस—हृष्टचित्ता। कूँ—तदाकारमव्यक्तशब्दम्। कौशिका—पेचका। सदसद्विवेकविधुर—भद्राभद्रविवेचनाविरहित। इतीव—इति मत्वेव। मुद्रितवती—निमीलितवती। पद्मेक्षण—पद्ममेव ईक्षणं चक्षु। दिनावसाने प्रकृत्या मुद्रितस्य पद्मस्य इत्थं भावान्तरं कविरुत्प्रेक्षत।

(१३०) किंशुके—पलाशतरौ। बाह्यरङ्गप्रपञ्चेन—बहिः प्रकटितसुन्दरवर्णविस्तारेण।

(१३१) शाखेत्यादि—शाखानां सन्तत्या विस्तारेण सन्निकृष्टं समाच्छादितं नभोगगनं यैस्त। अविकलै—अविकृतै शोभनैरित्यर्थ। आर्त्तिच्छिद—पीडापनोदका। द्विपदलै—द्वे वा त्रीणि वा द्विवाणि तानि दलानि तै द्विपदलै। शालि—हैमन्तिकधान्यस्य। स्तुम—प्रशंसाम। तुङ्गता—औन्नत्यम्। सुकृतिना—पुण्यकर्मणा।

(१३२) सङ्कोच—क्षुद्रत्वम्। अञ्चति—प्राप्नुवति। दीनदीन—दीनेभ्योऽपि दीन।

। (१३३) पूर—जलोच्छ्वास। तटिनि—हे नदि। तटेत्यादि—तटद्रुमाणां नीरस्थशाखाणां पातनेन यत् पातकं पाप तत्।

(१३४) उदयन्ते—उद्गच्छन्ति, उत्पद्यन्ते इति यावत्।

(१३५) मधुरनिस्वने—मधुरे श्रोत्रसुखे निस्वने शब्दे। विधुर—अनाथे कातरं मामिति शेष। आश्वसिषि—आश्वस्तं करोषि। आदरात्—आदरं प्रदर्श्येत्यर्थ.।

(१३६) नभसि—आकाशे। निरवलम्बे—निराधारे। सीदता—अवतिष्ठमानेन। त्वदभिमुखेत्यादि—तव अभिमुखं त्वां लक्ष्यीकृत्येत्यर्थं निविष्टं स्थापितं उत्तानमुद्रितं चञ्चुपुटं येन तथोक्तेन।

(१३७) विहृत्य—विचरणं कृत्वा। दिधक्षो—दग्धुमिच्छो।

(१३८) शीकरवर्षिभि—सजलकणै। निस्वने—कण्ठध्वनिभि। उन्निद्रै—विकसितै। अमलै—स्वच्छै। नीत्वा—प्रापय्य। निर्वृति—सुखम्। चौयधना—

शीकरवर्षिवातादिसम्पद्विहीनो। वहन्—धारयन्। धन्य —श्लाघ्य। मृणाली-च्छलात्—बिसकिसलयव्याजेन। नवेन्दुविशदानि—नवेन्दुर्द्वितीयाचन्द्र तद्वत् विशदानि शुभ्राणि नवेन्दोरुपमानत्वात् सूक्ष्माणीत्यपि प्रतीयते। अस्थीनि—मृणालरूप-कीकसानि। पद्माकर —पद्मोत्पादक सरोवर। यदा शीकरवर्षिवातादिसम्पदो न सन्ति तदा पद्माकर सरोवर स्वस्य मृणालरूपाण्यस्थीन्यपि याचकेभ्यो ददातीति स धन्य इति विशदार्थ।

(१४०) बद्ध —सेतुबन्धनसमये वानरैरिति शेष। गिरीत्यादि—गिरिणा मन्दराख्येन यत् मथन विलोडनं तेन लुण्ठितमपहृत सर्वस्वं यस्य स देवासुरैरिति शेष। परभीतेत्यादि—परस्मात् शत्रो पक्षच्छेत्तुरन्द्रादित्यर्थ, भीतस्य भूधरस्य मैनाकस्य रक्षायाम्। दीक्षित —धृतव्रत कृतनिश्चय इत्यर्थ।

(१४१) गुरुतागर्व्वं—अतिगभीरजलत्वेन यद् गुरुत्वं तस्य गर्व्वस्तं। अन्यस्मात्—अपरजलाशयात्। पीतस्त्वा —अर्णवयानारोहिणा।

(१४२) कल्लोलेन—महातरङ्गेण वेल्लिता चालिता ये दृषद प्रस्तरखण्डा तेषां परुषा कठोरा ये प्रहारास्ते। मकराकर—हे हिंस्रजलचरनिलय। प्रहाराघातेन रत्नान्यवमन्यमानस्य सागरस्य तदानीं रत्नाकरेति विहाय मकराकरशब्देन सम्बोधन समुचितमेव। मावमंस्था —अवमानितानि मा कार्षी। कौस्तुभेन—तन्नाम्ना विष्णु वक्ष स्थलस्थमणिविशेषेण। तव नाम—रत्नाकर इत्यर्थ।

(१४३) धारा—जलानाम्। पूर्णो निलय —अगूढ आधार। तृष्णा—अव धनलिप्सा। ताम्यत्तिमिमकर—ताम्यन्त खिद्यमाना तिमिमकरा यत्र तथाभूतं सन्तम्। मुनि —अगस्त्य।

(१४४) व्रजत —विष्णुसमीपं गच्छत। पायोनिधे—हे समुद्र। आमर्द—अन्तर्गत तवेति शेष। आवहेथा —कुर्य्या। न कदाचिदेनं विस्मरेरित्यर्थ।

(१४६) ध्वान्तौघ —अन्धकारसमूह। निर्व्वान्ति सूर्य्योपला —सूर्य्यकान्तादयो मणय निर्व्वाणतां लभन्ते। ये—ऐषका इत्यर्थ। ध्वाङ्क्षभिया—काकभयात्।

(१४८) इय हि लौकिकी रीतिर्यद् यद्धस्तिष्ठति सुतरा धावतीति। अत्र तु तद्विपरीत्यमिति।

(१४९) यस्य हृदयं नास्ति स कथं सहृदयो भवतीति विरोधाभास। तत् परिहारस्तु उदरचिन्तापराधखलाद्भ्रान्तमना इत्यर्थकरणात्।

(१५०) अन्तक —यम। अन्तकाल—मृत्युसमयम्। उपमर्द्दस्य—सम्पदात्।

(१५२) तेन—तेजीयसा तेजसा। तेजीयसा—तेज इति शेष। न—सद्य-मिति शेष। सिकता—वालुका, रवितेजसा तापिता इत्यर्थः।

(१५३) जहत्—परित्यजन्।

(१५४) अवय—मेघाम्बुगला वा। केवलकवय—विद्यारहिता कविता-लेखका। केवलं धीरा—विद्यासम्पन्ना कवितारचनानभिज्ञाः। कीरा—शुक-पक्षिण। धीरा पण्डितकवय—ये जना पण्डिताः कवितारचनाशक्तिसम्पन्नाश्च त एव धीरा, सर्वेषां जेतार इत्यर्थ। अवमन्ता—अवमाननाकारी। गवय—गोवत् पशुविशेष वानरविशेषो वा।

(१५५) कुशलै—दक्षै अश्वचालनानिपुणैरित्यर्थ।

(१५७) अणु—क्षुद्र अल्प इति यावत्। नितरां—सम्यक्। तक्रस्य—'घोल' इति यस्य प्रसिद्धि तस्य।

(१५८) बोधयन्ति विज्ञापयन्ति। लोकानां—लोकानां मध्ये, निर्द्धारणे षष्ठी, लोकानां दर्शयन्तीति वा अन्वय, तत्र कर्मणि सम्बन्धविवक्षायां षष्ठी। अदातु—कृपणस्य।

(१६०) मदां—मत्तिकानाम् कर्मणि षष्ठी। मुदे—आनन्दाय।

(१६१) दयासी यद—नवभ्यो यदिभ्यो विलक्षण इत्यर्थ।

(१६२) सिद्धपुरुषो हि स्वमहिमा सर्व्वं पश्यति तन्तु न कोपि द्रष्टुं शक्नोतीति साध्यम्।

(१६४) विद्व्यकवे प्रपितामही भट्टमुक्तिकलस इति विक्रमाङ्कदेवचरिते-ऽष्टादशसर्गे निर्णीतम्। "द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभाव" इति बहुदेश्य पाठ, तत्र अत्र नियुक्तमस्यास्तीति अर्शआदित्वात् अच्। द्विगु—द्वौ गावौ यस्य स। सद्वन्द्व—स्त्रीपुरुषद्वन्द्वपर्य्याप्तिद्वयात्मक। अव्ययीभाव—व्ययाभाव-सम्पन्न। तत्पुरुष बहुव्रीहि—हे पुरुष तत् कर्म्म धारय कुरु येन अहं बहुव्रीहि बहुधान्यसम्पन्नः स्या म्।

(१६५) मुषली—गृहगोधिका, 'टिकटिकी' इति भाषा। असून्—प्राणान्। लूतातन्तु—ऊर्णनाभजालम्।

(१६६) विकसामि—अद्य त्वया अवमादाय आगमस्यमिति मत्वा हृष्यामि इत्यर्थ। सङ्कोचम् उपैमि—यद्यपि आगतमिति तु स्वमनुभवामीत्यर्थ।

(१६७) दूये—खेदं प्राप्नोमि। मणिकङ्कणवर्जितम्—मणियुक्तं यत् कङ्कणं

तेन वर्ज्जितम्। परम्—अत्यन्तम्। अधिकङ्कणवर्ज्जितम्—अधिकं मन्मथपाश, 'जाला' इति भाषा, कणवर्ज्जितम् धान्यकणरहितम्।

(१६९) कर्णामृत—श्रुतिसुखदम्। सूक्तिरस—कविवचनमाधुर्य्यम्। केलिवन—क्रीडाकाननम्। क्रमेलक—उष्ट्र।

(१७०) सुनिपात—सुनिपुण वेदान्तशास्त्रार्था निखिलनिगूढतत्त्वविदपि। मैनाक—तदाख्यो गिरिः। स च पर्व्वतपक्षच्छेदनप्रवृत्तपुरन्दरभयात् समुद्रं प्रविवेशेति पौराणिकी वार्त्ता। मार्द्दव—समुद्रे चिरमज्जनेनाप्यवयवगतशैथिल्यात् कोमलत्वम्।

(१७१) मित्रोदये—मित्रस्य सुहृद पक्षे सूर्य्यस्य। उदये—अभ्युन्नतौ, पक्षे प्रकाशे। म्लानि—मालिन्यम्। दोषागमे—दोषस्य अनिष्टस्य आगमे उपस्थितौ, पक्षे दोषा रात्रि तस्याः आगमे। सम्बन्धमात्रेण—सम्पर्कमात्रेण। दहति—अनिष्टमाचरति, पक्षे भस्मीकरोति।

(१७२) आविष्कृतान—अन्वेषकान्। कलयन्ति—साभिनिवेश पश्यन्ति। तूर्णीं—मौनमवलम्ब्येत्यर्थ। दुश्चेतस—खला। मनु—अवधार्य। रागात्—अनुरागात्। नली व्याधानां पक्षिवेधनशरविशेष। सप्तानां नलानां समाहार सप्तनली, निजा सप्तनली ताम्।

(१७३) आयामयसे—आयाकुम्भीरे अवलोकते।

(१७४) दशपुत्रपुत्रिणी—दशभि पुत्रैः पुत्रवती जीवद्दशपुत्रजननी इत्यर्थ।

(१७८) हटिकला—विधाता। वृत्ति—जीविका। प्राय—बाहुल्येन।

(१७९) यते प्रसादानुरोधात् सेवकस्य तु द्रव्याभावात्। पापधर्म्मज पार्थक्य—सेवकस्य पापजनित यतेस्तु धर्म्मजनित प्रभेद।

(१८१) हरे—घोटकस्य। "हरिरिन्द्रो हरिर्भानुर्हरिर्विष्णुर्हरिर्मरुत्। हरिः सिंहो हरिर्भेको हरिर्वाजी हरिः कपि। हरिर्मुहुर्हरिर्भोगी हरिः सोमो हरिर्यम। हरिः शुको हरिः सर्पः स्वर्णवर्णो हरिः स्मृत"—अनेकार्थध्वनिमञ्जरी। स्पर्द्धा—विवाद। विदुषा—पण्डितेन सहेत्यर्थ। तथाच—"सहुनयन् मूर्तिमनार्य्यसङ्गमाद् वरं विरोधोऽपि समं महात्मभि।"—इति किराते।

(१८२) दाराम्—अत्र दारशब्देन स्तनया दारगतरूपलावण्यादिकं बोध्यम्। तत्र अपत्यजननामन्तरमेव भवतीति। यद्वा कन्यादानानुरोधेन पत्नी पतिं परित्यज्य पुत्रसमीपे प्रायो वर्त्तत इति पुत्रस्य दारहारकत्वम्।

(१८४) याचकं प्रार्थनां कुर्व्वाणं गर्भं लोका अर्थिन धनवन्तं वदति,

( ६८ )

देव्या दशभुजात्वकारणं जिज्ञासमानं प्रति भक्तस्योक्तिरियम् —

आविष्कृतैर्दशभुजैर्दशदिग्भवेभ्यो
दुःखेभ्य आशु परिमोचयितुं स्वभक्तान् ।
कैलासनाम निजधाम विहाय भूमौ
दुर्गागता दशभुजा तनुते शुभं नः ॥

( ७० )

काली कटितटे करश्रेणीं गले शिरोमालाञ्च कथं धारयतीत्याह —

वदन्तं त्वन्नाम क्षणमपि भजन्तं तव पदं
जपन्तं वा जन्तुं जननि जनुरन्तं तव मनुम् ।
चतुर्बाहुं कञ्चं कमपि चतुरास्यं कमपि किं
करश्रेणीकाञ्चीं वहसि बहुमुण्डस्रजमपि ॥

---

## गङ्गा ।

( ७१ )

जननि सुरतटिनि भवतीं
कदाचन न पतितपावनीं मन्येऽहम् ।
शूली गदी च तीरे
नीरेऽपि मृतः पुनरपि शूली गदी च ॥
( उद्भटसागरस्य )

( ७२ )

यद्गर्भे सुखदे स्थितस्य न पुनर्गर्भागतिर्दुःखदा
गर्भक्लेशनिवेदनाय मुनिना गर्भे धृता यैकदा ।
या सेव्याऽपि च सेवकोपपदगा पुत्त्रस्य या क्रोड़दा
सा वृन्दारकवृन्दवन्दितपदा माताऽस्तु मे सर्व्वदा ॥

( उद्भटसागरस्य )

( ७३ )

पायं पायमपायसञ्चयहरं गङ्गे त्वदीयं जलं
नायं नायमनायकोऽहमसकृद् मूर्त्तिञ्च नेत्रे तव ।
स्मारं स्मारमसारसंसृतिहरं गङ्गेति वर्णद्वय
चारं चारमितस्ततस्तव तटे मुक्तो भवेयं कदा ॥

( उद्भटसागरस्य )

( ७४ )

किंवदन्तीयं श्रूयते यत् त्रिवेणीनिवासिनो द्वादशाधिकशततवर्षवयस्कस्य गङ्गातीर-स्थस्य स्मार्त्तनैयायिकशिरोमणेर्जगन्नाथतर्कपञ्चाननस्य समीपे तस्य प्रधाननैयायिकच्छात्र कश्चित् पृष्टवान् गुरुदेव ईश्वरतत्त्वविषये बहुस्य शिक्षा प्रदत्ता भवतैव, किन्तु एकया एव वक्त्या ईश्वरस्य स्वरूपनिर्णयो न कृत । तदाप्युपाध्याय मज्जाटशायवलीन वक्ष्यमाण-श्लोकेन उत्तरमिदं कृतवान् । इयमपि किंवदन्ती श्रूयते यत् श्लोकपाठान्त एव तस्य प्राणवायुर्निर्जगाम —

नराकारं वदन्त्येके निराकारञ्च केचन ।
वयन्तु दीर्घसम्बन्धाद् नाराकाराम् ( नीराकाराम् ) उपास्महे ॥

( जगन्नाथ तर्कपञ्चाननस्य )

( ७५ )

कश्चिद् गङ्गाभक्त कविर्भङ्ग्यन्तरेण गङ्गामाहात्म्य कथयति —

गङ्गे त्रिदोषनाशाय त्वयि मज्जति यो जनः ।
तं करोषि चतुर्दोषं मातः कथं विकत्थसे ॥

( ७६ )

प्रयागे गङ्गायमुनासरस्वतीसमागमस्थानं युक्तवेणी, त्रिवेण्या तु गङ्गातः यमुना-सरस्वत्योर्विश्लेषात् तत्स्थानं मुक्तवेणीति कथ्यते। अतस्तत्र जाह्नवी मन्दवेगेति लक्ष्यते। अस्यैव जाह्नवीवेगमान्द्यस्य कारणं जिज्ञासुना वर्द्धमानाधिपेन पृष्टो वागीश्वरविद्यालङ्कार आह —

सगरसन्ततिसन्तरणेच्छया
प्रचलिताऽतिजवेन हिमाचलात् ।
इह हि मान्द्यमुपैति सरस्वती-
यमुनयोर्विरहादिव जाह्नवी ॥
(वागीश्वर विद्यालङ्कारस्य)

( ७७ )

श्रीकृष्णं प्रति राधिकाया उक्तिरियम् —

अम्बुजमम्बुनि जातं
क्वचिदपि न तु जातमम्बुजादम्बु ।
त्वयि मुरहर विपरीतं
पदाम्बुजात् त्रिपथगा जाता ॥

---

## गङ्गालीला।

( ७८ )

शिवशिरो विहाय गङ्गा कथं धरणीतलमागतेत्याह —

शिवा रुष्टा दृष्ट्वा प्रमथपतिना मूर्द्धकलिता
परित्यक्ता गङ्गा बहुतरतरङ्गा किमु रुषा।
जनेभ्यः पापिभ्यः प्रमथपतिता दातुमधुना
समायाति क्षौणीं त्रिभुवनजनत्राणसलिला॥

## गणेशः।

( ७९ )

विघ्नव्यालावलिखगवरो विघ्ननागेन्द्रसिंहो
विघ्नध्वान्तप्रखरमिहिरो विघ्नशैलैकवज्रः।
विघ्नाम्भोदप्रबलपवनो विघ्नसिन्धोरगस्त्यो
विघ्नारण्यप्रबलदहनो नोऽवताद् विघ्नराजः॥

(उद्भटसागरस्य)

## कार्त्तिकेयः।

( ८० )

माता यस्य धराधरेन्द्रदुहिता तातो महेशस्तथा
भ्राता विघ्नकुलान्तकः पितृसखो देवो धनानां पतिः।
ख्यातः क्रौञ्चविदारणे सुरपतेः सेनाग्रणीः षण्मुख-
स्तद्दुर्दैवबलेन किं न घटते कुत्रापि पाणिग्रहः॥

(भानुसेनस्य)

भृङ्गी ।

( ८१ )

सेवां नो कुरुते करोति न कृषिं वाणिज्यमस्यास्ति नो
पैत्रं नास्ति धनं न बान्धवबलं नैवास्ति कश्चिद् गुणः ।
द्यूतस्त्रीव्यसनं न मुञ्चति तथापीशस्तदेतत् फलं
किं मे स्यादिति चिन्तयन्निव कृशो भृङ्गी चिरं पातु वः ॥

---

## तीर्थ-महिमा ।

### काशी ।

( ८२ )

मुक्तेर्जङ्गकुमारिका प्रजनिका मुक्तिप्रदा काशिका
युक्तं राजति तद्वयं स्मृतचयं काश्यां स्मरारिः स्वयम् ।
मोक्षे दीक्षयिता स्थिता गिरिसुता दीनावदानव्रता
किं लब्धुं विपदास्पदेऽपरपदे भ्रान्तं मनो भ्राम्यति ॥

( राखालदास न्यायरत्नस्य )

( ८३ )

गङ्गावाराणस्योर्भेदं दर्शयति :—

यस्यां शम्भुर्या च शम्भूत्तमाङ्गे
शम्भोरन्यः कोऽनयोरन्तरज्ञः ।
एतज्जाने मोक्षदा किन्तु काशी
पञ्चक्रोशी लक्षयामा च गङ्गा ॥

---

8445.

## वृन्दावन-वाराणस्यौ ।

( ८४ )

वृन्दावनवाराणस्योरुत्कर्षापकर्षौ दर्शयति :—

( क )

काशीधाम्नि शिवमाहात्म्यं वर्णयति —

यत्रास्ते मणिकर्णिकाऽमलसरः स्वर्दीर्घिका दीर्घिका
रत्नं तारकमक्षरं तनुभृते शम्भुः स्वयं यच्छति ।
तस्मिन्नद्भुतधामनि स्मररिपोर्निर्वाणमार्गे स्थिते
मूढोऽन्यत्र मरीचिकासु पशुवत् प्रत्याशया धावति ॥

( ख )

वृन्दावनधाम्नि कृष्णमाहात्म्यं प्रतिपादयति —

घर्माम्भो मणिकर्णिका भगवतः पादाम्बु भागीरथी
काशीनां पतिरङ्गमस्य भजते श्रीविश्वनाथः स्वयम् ।
एतस्यैव हि नाम शम्भुनगरे निस्तारकं तारकं
तस्मात् कृष्णपदाम्बुजं भज सखे निर्वाणमोक्षप्रदम् ॥

---

## मूर्त्ति-समष्टिः ।

### मूर्त्तित्रयम् ।

( ८५ )

श्यामश्वेतारुणाङ्गा जलधरणिधरोत्फुल्लपङ्केरुहस्था
सोमासावित्र्युपेता रथचरणपिनाकोग्रहुङ्कारशस्त्राः ।
देवा द्वित्र्यष्टनेत्रा जगदवनसमुच्छेदनोत्पत्तिदक्षाः
प्रीता वः पान्तु नित्यं हरिहरविधयस्तार्क्ष्यगोहंसपत्राः ॥

---

## रामकृष्ण-मूर्त्तिः ।

( ८६ )

यः पूतनामारणलब्धकीर्त्तिः
काकोदरो येन कृतो विदर्पः ।
यशोदयाऽङ्कगतमूर्त्तिरव्याद्
नाथो यदूनामथवा रघूणाम् ॥

## हरिहर-मूर्त्तिः ।

( ८७ )

हरिहरयोरिह भेदं
कलयति लोको विनाशास्त्रम् ।
अनयोः प्रकृतिरभिन्ना
प्रत्ययभेदाद् विभिन्नवद् भाति ॥

( ८८ )

यौ तौ शङ्खकपालभूषितकरौ पुष्पास्थिमालाधरौ
देवौ द्वारवतीश्मशाननिलयौ नागारिगोवाहनौ ।
द्वित्र्यक्षौ बलिदक्षयज्ञमथनौ श्रीशैलजावल्लभौ
पापं वो हरतां सदा हरिहरौ श्रीवत्सगङ्गाधरौ ॥

( ८८ )

( क )

(उमाधवपक्षे श्लोकस्यास्य आकृतिरियम्)

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत्।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥

( ख )

(माधवपक्षे श्लोकस्यास्य आकृतिरि...)

येन ध्वस्तमनोऽभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयोऽगं गां च योऽधारयत्।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥

(भारवेः, केषाचिन्मते चन्द्रकस्य चन्दकस्य वा)

---

## अर्द्धनारीश्वर-मूर्त्तिः।

( ९० )

( क )

कविः श्लोकेऽस्मिन् एव कौशलं दर्शितवान् येन वसन्ततिलकाच्छन्दसा निबद्धेनानेन श्लोकेन दुर्गामाहात्म्यं वर्णितं, किन्त्वस्य प्रतिपादस्य षष्ठसप्तमाष्टमवर्णेषु वियुक्तेषु पद्यमिदं इन्द्रवज्राच्छन्दसि परिणतं भवति तथा सति शिवमाहात्म्यं वर्ण्यते :—

( वसन्ततिलकाच्छन्दसा गौरीस्तुतिः )

विश्वस्य हेतुरमरैर्बहु गीयसे त्वं
विश्वंभरे शर्वशिवे त्रिगुणात्ममूर्त्ते ।
चिद्व्योमतोऽपि परमां प्रथमं वदन्ति
त्वां योगिनस्तुतिपरा प्रणिधानदृष्ट्या ॥

( ख )

( इन्द्रवज्राच्छन्दसा शिवस्तुति. )

विश्वस्य हेतुर्बहु गीयसे त्वं
विश्वम्भरेश त्रिगुणात्ममूर्त्ते ।
चिद्व्योमतोऽपि प्रथमं वदन्ति
त्वां योगिनस्तु प्रणिधानदृष्ट्या ॥
( शार्ङ्गधरस्य )

---

## गौरीशौरि-मूर्त्तिः ।

( ८१ )

श्रीकण्ठालिङ्गनेन प्रमदभरपरिभ्राजमानाननश्री-
र्धाम्ना स्वेनेव दूरीकृतकलिदनुजप्रस्फुरद्भूरिभूतिः ।
शश्वद् विश्वैकमाता निरतिशयलसत्फुल्लपाथोजपाणि-
र्गौरी वा शौरिराद्य प्रणयतु निखिलप्राणिनां प्रीणनानि ॥
( हरिहर शास्त्रिणः )

---

## प्रश्नोत्तराणि ।

### (१) कृष्णचन्द्रावली-प्रश्नोत्तराणि ।

( ८२ )

राधामोहनमन्दिरं जिगमिषोश्चन्द्रावलीमन्दिराद्
राधे क्षेममिति प्रियस्य वचनं श्रुत्वाह चन्द्रावली ।
कंस क्षेममये विमुग्धहृदये कंसः क्व दृष्टस्त्वया
राधा क्वेति विलज्जितो नतमुखः स्मेरो हरिः पातु वः ॥
( लीलाशुक विल्वमङ्गलस्य )

---

### (२) कृष्णनन्द-प्रश्नोत्तराणि ।

( ८३ )

कृष्ण त्वं नवयौवनोऽसि चपलाः प्रायेण गोपाङ्गनाः
कंसो भूपतिरब्जनालमृदुलग्रीवा वयं गोदुहः ।
तद् याचेऽञ्जलिना भवन्तमधुना वृन्दावनं मां विना
मा यासीरिति नन्दगोपवचसा क्षीणो हरिः पातु वः ॥

---

### (३) कृष्णयशोदा-प्रश्नोत्तराणि ।

( ८४ )

कृष्ण त्वं पठ किं पठामि ननु मे शास्त्रं किमु ज्ञायते
तत्त्वं कस्य विभोः स कस्त्रिभुवनाधीशश्च तेनापि किम् ।
ज्ञप्तिर्भक्तिरथो विरक्तिरनया किं मुक्तिरेवास्तु ते
दध्यादीनि भजामि मातुरुदितं वाक्यं हरेः पातु वः ॥

( ८५ )

मातः किं यदुनाथ देहि चषकं किं तेन पातुं पय-
स्तन्नास्त्यद्य कदास्ति तन्निशि निशा का वाऽन्धकारोदयः ।
बद्धे नेत्रयुगे निशाऽप्युपगता देहीति मातुस्तदा
वक्षोजाम्बरकर्षणोद्यतकरः कृष्णः स पुष्यातु नः ॥

( लीलाशुक बिल्वमङ्गलस्य )

## (४) कृष्णसत्यभामा-प्रश्नोत्तराणि ।

( ८६ )

अङ्गुल्या कः कपाटं प्रहरति कुटिलो माधवः किं वसन्तो
नो चक्री किं कुलालो नहि धरणिधरः किं फणीन्द्रो द्विजिह्वः ।
मुग्धे घोराहिमर्दी किमुत खगपतिर्नो हरिः किं कपीन्द्रः
इत्येवं सत्यभामाप्रतिवचनजितः पातु वश्चक्रपाणिः ।

( लीलाशुक बिल्वमङ्गलस्य )

## (५) दुर्गाकार्त्तिकेय-प्रश्नोत्तराणि ।

( ८७ )

मातर्जीव किमेतदञ्जलिपुटे तातेन गोपायितं
वत्स स्वादु फलं प्रयच्छति न मे गत्वा गृहाण स्वयम् ।
मात्रैवं प्रहिते गुहे विघटयत्याकृष्य सन्ध्याञ्जलिं
शम्भोर्भिन्नसमाधिरुद्धमनसो हासोद्गमः पातु वः ॥

( योगेश्वरस्य )

## (६) दुर्गागणेशकार्त्तिकेय-प्रश्नोत्तराणि ।

( ९८ )

हे हेरम्ब किमम्ब रोदिषि कथं कर्णौ लुठत्यग्निभूः
किं ते स्कन्द विचेष्टितं मम पुरा संख्या कृता चक्षुषाम् ।
नैतत् तेऽप्युचितं गजास्य चरितं नासां मिमीतेऽम्ब मे
तावेवं सहसा विलोक्य हसितव्यग्रा शिवा पातु वः ॥

---

## (७) बलिवामन-प्रश्नोत्तराणि ।

( ९९ )

कस्त्वं ब्रह्मन्नपूर्वः क्व च तव वसतिर्याऽखिला ब्रह्मसृष्टिः
कस्ते नाथो ह्यनाथः क्व च तव जनको नैव तातं स्मरामि ।
किं तेऽभीष्टं ददामि त्रिपदपरिमिता भूमिरल्पा किमेषा
त्रैलोक्यं भावजं यो बलिमिदमवदद् वामनो वः स पायात् ॥

---

## (८) राधाकृष्ण-प्रश्नोत्तराणि ।

( १०० )

केयं भाग्यवती तवोरसि मणौ ब्रूपेऽग्रवर्णं विना
कृत्वाऽस्याः प्रथमं विना क्व सहजो वर्णो मणेस्तादृशः ।
स्त्रीरूपं कथमस्य लिङ्गनियमात् पृच्छामि सध्वाकृतिं
मुग्धे त्वत्प्रतिबिम्बमित्यपलपन् राधां हरिः पातु वः ॥

( १०१ )

कस्त्वं भो निशि केशवः शिरसिजैः किं नाम गर्वोऽस्ति ते
भद्रे शौरिरहं गुणैः पितृपितुः पौत्रस्य किं स्यादिह ।
चक्री चन्द्रमुखि प्रयच्छसि न मे कुण्डीं घटीं दोहनी-
मित्थं राधिकया जितोत्तरतया दुःस्थो हरिः पातु वः ॥

( १०२ )

कोऽयं द्वारि हरिः प्रयाहि विपिनं शाखामृगेणात्र किं
कृष्णोऽहं दयिते बिभेमि नितरां कृष्णः कथं वानरः ।
मुग्धेऽहं मधुसूदनो व्रज लतां तामेव पुष्पान्विता-
मित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥
( शुभाङ्कस्य )

---

## (६) राधागोपाङ्गना-प्रश्नोत्तराणि ।

( १०३ )

कृष्णविरहविधुरां राधिकां प्रति तत्सख्या उक्तिरियम् :—

कुन्दकुञ्जममुं पश्य पुष्पितं सखि शोभनम् ।
अमुना कुन्दकुञ्जेन सखि मे किं प्रयोजनम् ॥

---

## (१०) रामलक्ष्मण-प्रश्नोत्तराणि।

( १०४ )

भ्रातः प्रापय मामनातपभुवं प्राप्तोदयोऽयं रवि-
र्नायासौ हिमचन्द्रमा इतरथा चास्मिन् कलङ्कः कथम्।
वंशेऽस्मिन् मदकीर्तितः कुमुदिनी कस्मादियं काश्यते
सद्येवं नलिनीप्रियाङ्कजननादास्यं करोति स्फुटम्॥

( १०५ )

के यूयं रघुनाथ नाथ किमिदं भृत्योऽस्मि ते लक्ष्मणः
कोऽहं वत्स स आर्य एव भगवानार्यः स को राघवः।
कान्तारे किमिहास्महे वत त्वया देव्या गतिर्मृग्यते
का देवी जनकाधिराजतनया हा जानकि क्वासि मे॥

---

## (११) रावणाङ्गद-प्रश्नोत्तराणि।

( १०६ )

कस्त्वं बालितनूद्भवो रघुपतेर्दूतः स बालीति कः
को वा वानर राघवः समुचिता ते बालिनो विस्मृतिः।
त्वां बद्ध्वा चतुरम्बुराशिषु परिभ्राम्यन् मुहूर्त्तेन यः
सन्ध्यामर्चयति स्म निस्त्रप कथं तातस्त्वया विस्मृतः॥

( हनूमतः )

---

## (१२) लक्ष्मीनारायण-प्रश्नोत्तराणि ।

( १०७ )

धन्या देवकुले गिरीन्द्रतनया गौरी महासुन्दरी
यस्माद् वृद्धपतिं विहाय जटिलं नान्यं जनं सेवते ।
लोले लक्ष्मि विहाय मा धनवतां गेहेषु तिष्ठेः सदा
कः प्राणेश्वर वक्ति तद् बुधगणास्ते मे सपत्नीसुताः ॥

( १०८ )

देवि त्वं कुपिता त्वमेव कुपिता कोऽन्यः पृथिव्या गुरु-
र्माता त्वं जगतां त्वमेव जगतां माता न विज्ञोऽपरः ।
देवि त्वं परिहासकेलिकलहेऽनन्ता त्वमेवेत्यथ
ज्ञातानन्दपदो नमज्जलधिजा शौरिश्रियं पातु वः ।

( वाक्पतिराजस्य )

---

## (१३) लक्ष्मीपार्वती-प्रश्नोत्तराणि ।

( १०९ )

परिहरमूर्ते पार्श्वर्त्तिनी लक्ष्मीपार्वत्यो परिहासालाप —

लोले ब्रूहि कपालिकामिनि पिता कस्ते पतिः पाथसां
कः प्रत्येति जलादपत्यजननं प्रत्येति यः प्रस्तरात् ।
इत्थं पर्वतराजसिन्धुसुतयोराकर्ण्य वाक्चातुरीं
सस्मेरस्य हरेर्हरस्य च मुदो निघ्नन्तु विघ्नं तव ॥

( ११० )

भिक्षार्थी स क्व यातः सुतनु बलिमखे ताण्डवं क्वाद्य भद्रे
मन्ये वृन्दावनान्ते क्व नु स मृगशिशुर्नैव जाने वराहम्।
बाले कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता
लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां वः ॥

---

## (१४) विष्णुसागर प्रश्नोत्तराणि।

( १११ )

हंहो मीनतनो हरे किमुदधे किं वेपसे शैत्यतः
खिन्नः किं वड़वानलात् पुलकितः कस्मात् स्वभावादहम्।
इत्थं सागरकन्यकासुखशशिव्यालोकनेनाधिक-
प्रोद्यन्मारजविक्रियानिह्नुतिपरः शौरिः शिवायास्तु वः ॥

---

## (१५) सीतारावण-प्रश्नोत्तराणि।

( ११२ )

श्लोकस्यास्य पूर्वचरणत्रये रावणस्य सीतां प्रति उक्तिः चतुर्थचरणे तु तस्याः प्रत्युत्तरम्।—

भविता रम्भोरु त्रिदशवदनग्लानिरधुना
स रामो मे स्थाता न युधि पुरतो लक्ष्मणसखः।
इयं यास्यत्युच्चैर्विपदमधुना वानरचमू-
र्लघिष्ठेदं षष्ठाक्षरपरविलोपात् पठ पुनः ॥

---

## (१६) हरपार्वती-प्रश्नोत्तराणि ।

( ११३ )

पार्वत्या मानभङ्गाय शिवस्य सानुनयवचांसि पार्वती श्लेषेणान्यथा प्रतिपादयति ,—

किं गौरि मां प्रति रुषा ननु गौरहं किं
कुप्यामि कां प्रति मयीत्यनुमानतोऽहम् ।
जानामि सत्यमनुमानत एव स त्व-
मित्थं गिरो गिरिभुवः कुटिला जयन्ति ॥
( रुद्रस्य )

( ११४ )

न क्रोधः क्रियतां प्रिये स तु भवन्मौलिस्थगङ्गोदरे
मुग्धे मानसपूजितं त्यज क्षतं युष्मद्वियोगद्वयम् ।
वक्रे श्लेषममुं निराकुरु कदाश्लिष्टोऽसि वक्रो मया
वामाङ्गेरति हसोत्तरः स्मरहरः स्मेराननः पातु वः ॥

( ११५ )

स्वेदस्ते कुत ईदृशः प्रियतमे त्वन्नेत्रवह्नेर्विभो
कस्मात् कम्पनमेतदिन्दुवदने भोगीन्द्रभीतेस्तव ।
रोमाञ्चः कथमेष देवि भगवन् गङ्गाम्भसां शीकरै-
रित्थं भर्त्तरि भावगोपनपरा गौरी चिरं पातु वः ॥
( लक्ष्मीधरस्य )

( ११६ )

एषा ते हर का सुगात्रि कतमा शीर्षे स्थितेयं जटा
हंसः किं भजते जटां नहि शशी चन्द्रो जलं सेवते ।
मुग्धे भूतिरियं कुतोऽत्र सलिलं भूतिस्तरङ्गायते
इत्थं यो विनिगूहते त्रिपथगां पायात् स वः शङ्करः ॥

( ११७ )

दिव्यं वारि कथं यतः सुरधुनी मौलौ कथं पावको
दिव्यं तद्धि विलोचनं कथमहिर्दिव्यं स चाङ्गे तव ।
तस्माद् द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यता-
मित्थं शैलभुवा विहस्य लपितः शम्भुः शिवायास्तु वः ॥
( भानोः )

---

जीव-तरङ्गः ।

राजा ।

( ११८ )

भूपः कूप इवाभाति नमज्जनसुखावहः ।
ददाति गुणसम्बन्धात्मित्थं पात्रानुसारतः ॥

---

## राजसभा ।

( ११९ )

पयसा कमलं कमलेन पयः
पयसा कमलेन विभाति सरः
मणिना वलयं वलयेन मणि-
र्मणिना वलयेन विभाति करः ।
शशिना च निशा निशया च शशी
शशिना निशया च विभाति नभः
कविना च विभुर्विभुना च कविः
कविना विभुना च विभाति सदः ॥

---

## मन्त्री ।

( १२० )

मन्त्रिगुणावलीमाह —

शास्त्रज्ञः कपटानुसारकुशलो वाग्मी तु नो कोपन-
स्तुल्यो मित्रपरस्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः ।
शिष्टान् पालयिता शठान् व्यथयिता धर्मेऽतिलोभाग्नि
कार्य्यार्थी परतस्त्वबद्धहृदयो राज्ञस्य कोपापहः ॥

---

## साधारणराज-स्तुतिः ।

( १२१ )

कश्चित् कविः कश्चिद् राजानं स्तौति —

सर्वदा सर्वदोऽसीति स्तूयसे नृपते वृथा ।
नारयो लेभिरे पृष्ठं न नैवं परयोषितः ॥

( १२२ )

लक्ष्मीर्यत्र न गौस्तत्र यत्र गौस्तत्र नो रमा ।
ते यत्र विनयो नास्ति सा च सा च स च त्वयि ॥

( १२३ )

कल्पवृक्षो न जानाति न ददाति बृहस्पतिः ।
भवांस्तु जगतीजानिर्जानाति च ददाति च ॥

( १२४ )

ते कौपीनधनास्त एव हि परं धात्रीफलं भुञ्जते
तेषां द्वारि न दन्तिवाजिनिवहास्तैरेव लब्धा क्षितिः ।
तैरेवं समलङ्कृतं निजकुलं किं वा बहु ब्रूमहे
ये दृष्टाः परमेश्वरेण भवता रुष्टेन तुष्टेन वा ॥

( १२५ )

धनुरिव गुणयोगात् संनतो नासि वक्रो
विधुरिव रुचिमत्त्वात् सुन्दरो नो कलङ्की ।
जलधिरिव गभीरो नाप्रतीतो महत्त्वात्
सकलगुणनिधानं त्वन्तु दोषेण शून्यः ॥
( रामतारण शिरोमणिः )

( १२६ )

त्वामुर्वीधर रम्यकाव्यकरणे सेनावने भाषणे
न्याये व्याकरणे रणे वितरणे विश्वम्भराभूषणे ।
सत्यं सत्यवतोभये शरभये वागीशये विष्णये
दाक्षिकुक्षिभये पृथोदरभये देवद्रये मेरये ॥

---

## विशिष्टराज-स्तुतिः ।

## (क) हिन्दुराज-गणः ।

### अनङ्गभीमः ।

( १२७ )

पृथ्वी श्रीमदनङ्गभीम महती तद्वेष्टनं वारिधिः
पीतोऽसौ कलसोद्भवेन मुनिना स व्योम्नि खद्योतवत् ।
तद् विष्णोर्दनुजाधिनायजयिनः पूर्णं पदं नाभव-
च्चित्ते ते रमया सदास्ति स हरिस्त्वत्तो महान् नापरः ॥
( सार्वभौमस्य )

---

## कृष्णचन्द्रः ।

( १२८ )

अथैकदा महाराजकृष्णचन्द्रेण स्थापितायाः कालीमूर्त्तेर्मणिमुकुटरत्नं चोरितम्। पुरोधसा हरनाथेन कृतमेतदिति सञ्जातसंशयानां जनानां मतमनुसृत्य नृपस्तं कठोरं दण्डयितुमादिदेश। पुरोहितस्तु शासनभिया राजकर्मचारिणां मन्त्रणामनुसरन् नितरां नृपप्रिय सभापण्डित वाणीश्वरविद्यालङ्कारमुपेत्य सकलमेव व्यजिज्ञपत्। स च वक्ष्यमाणश्लोकं हरनाथहस्तेन राजान्तिके प्रेषयामास —

जले लवणवल्लीनं मानसं तन्मनोहरम् ।
मनोजिह्रीर्षया देव्याः किरीटं हरते हरः ॥

( वाणीश्वर विद्यालङ्कारस्य )

( १२९ )

अथ बालगोपालस्य एकचरणं पश्चाद्भागे करयैक सम्मुखे प्रसारित इति कृष्णचन्द्रेण पृष्टस्य वाणीश्वरस्योक्तिरियम् —

पाणौ मे नवनीतपुञ्जमधुना हारय वच स्थले
चूड़ायामपि चारुचन्द्रकशिखा कुत्रास्ति चित्तं हृतम् ।
पादाब्जे वचसेति जानु धरणौ संपात्य संगोपयन्
गोपाली हरिरेप तस्करतया खिन्नः स्वयं पातु वः ॥

( वाणीश्वर विद्यालङ्कारस्य )

( १३० )

एकदा जनन्या आद्यश्राद्धवासरे हस्तिनं दातुकामेन महाराजकृष्णचन्द्रेण कुतश्चित् कारणात् कम्पमानं तं गजमवलोक्य तत् कारणं पृष्टस्य बाणेश्वरविद्यालङ्कारस्योक्तिरियम् :—

हस्तन्यस्तकुशोदके त्वयि न भूः सर्वंसहा कम्पते
देवागारतयैव काञ्चनगिरिश्चित्ते न धत्ते भयम् ।
अज्ञातद्विपभक्ष्यभिक्षुभवनप्रस्थानदुःस्थाशया
वेपन्ते मददन्तिनो नरपतेः श्रीकृष्णचन्द्रस्य ते ॥
( बाणेश्वर विद्यालङ्कारस्य )

---

## गङ्गागोविन्दः ।

( १३१ )

षड्‌देशीयेन प्रथितयशसा भूस्वामिना गङ्गागोविन्द-सिंहेन प्रेषितानां गोलालूनां लाभेन नितरां परितुष्टस्य जगन्नाथतर्कपञ्चाननस्योक्तिरियम् :—

निरञ्जनं सुदुष्प्रापं सर्वव्यञ्जनरञ्जनम् ।
प्राप्तं श्रीगङ्गागोविन्दाद् गोलालु ब्रह्मयमया ॥
( जगन्नाथ तर्कपञ्चाननस्य )

---

## नन्दकुमारः ।

( १३२ )

परमशत्रुस्यापि महाराजस्य नन्दकुमारस्य भवने उत्सवनिबन्धन निमन्त्रणमनाप्नुवता जगन्नाथतर्कपञ्चाननेन समुद्दिश्य लिखितेयं लिपि —

त्वञ्चेच्चारयसे मुदा बहुगवान् दिग्दन्तिनां का क्षतिः
पद्मैर्मस्तकभूषणानि कुरुषे स्वर्णस्य किं लाघवम् ।
गोपीपादतले सदा पतसि चेत् किं निन्द्यते स्वर्वधूः
किं ब्रूमो बत कुब्जचक्रनृपते श्रीनन्दबालाऽधुना ॥

( जगन्नाथ तर्कपञ्चाननस्य )

---

## नवकृष्णः ।

( १३३ )

एकदा जगन्नाथतर्कपञ्चानन अक्षिरोगदुष्टस्य कस्यचित् ब्राह्मणस्योपकारार्थं महाराज नवकृष्ण प्रति अनुरोधपत्रमिदं प्रदत्तवान् —

द्वितीयमूलभूयिष्ठा मूर्त्तिरस्याद्यसम्भवा ।
अस्याः पार्थिवसम्बन्धे यतनीयं क्षितीश्वरैः ॥

( जगन्नाथ तर्कपञ्चाननस्य )

---

( १३४ )

कलिकाताख्य शोभावाजार निवासिना महाराजेन नवकृष्णेन प्रेषितानां कमला-निम्बूनां लाभेन नितरां परितुष्टस्य जगन्नाथतर्कपञ्चाननस्योक्तिरियम् —

अगस्त्यवंशसम्भूता वयं वातापिभक्षकाः ।
नवकृष्णप्रसादात्तु कमलारसपायिनः ॥

( जगन्नाथ तर्कपञ्चाननस्य )

---

## प्रतापादित्यः ।

( १३५ )

महाराजप्रतापादित्यस्य दानयशः प्रतापान् वर्णयति —

दानाम्बुसेकशीतार्त्ता यशोवसनवेष्टिता ।
त्रिलोकी ते प्रतापार्क प्रतापादित्य सेवते ॥

( अविलम्बसरस्वत्याः )

---

## राजसिंहः ।

( १३६ )

कदाचित् इदिलपुरनिवासिना निमन्त्रितेन चन्द्रमणिन्यायभूषणेन मुसङ्गाधिपालय-मागत्य कथितं राजन् यदि चक्रवाकमिथुनस्य कथोपकथनादेव सर्वैव भवत क्रिया कलापवार्ता मया ज्ञातेति —

इत्यूचे चक्रवाकं वचनमनुदिनं दुःखभाक् चक्रवाकी
क्वापि स्यात्तेष देशो न भवति रजनी यत्र हे प्राणनाथ ।
कान्ते चिन्तां त्यज त्वं दिनकरकिरणच्छादकस्यास्य मेरो-
र्मूले दत्तास्ति हस्तं विविधक्रतिमुदे राजसिंहः प्रदाता ॥

( चन्द्रमणि न्यायभूषणस्य )

---

## वर्द्धमान-राजः ।

( १३७ )

एकदा वाणेश्वरोऽथ भिक्षितु वर्द्धमानराजसदनमुपगम्य शिवपूजानिरतो नरपतिर्नायमवसर साक्षात्कारस्येति निशम्य दौवारिकमुवाच—ब्रूहि मद्वचनाद् राजानं "त्वं यस्य पूजायां व्यापृत स शिव पथस्थ गत । तस्य विभवादयोऽपि सर्व्वैरेव विभज्य गृहीता' । मयापि तस्य एकं द्रव्यं लब्धम् । तदेव भवन्तं दर्शयितुमिहागत ।" तदा कर्ण्य राजा वाणेश्वरमानाय्य पप्रच्छ किं त्वया लब्धमिति । स आह —

अर्द्धं दानववैरिणा गिरिजयाऽप्यर्द्धं हरस्याहृतं
देवत्थं धरणीतले स्मरहराभावे समुन्मीलति ।
गङ्गा वारिधिमम्बरं शशिकला नागाधिप क्ष्मातलं
सर्वज्ञत्वमधीश्वरत्वमगमत् त्वां माञ्च भिक्षाश्रय. ॥
( शङ्करकवे, केषाञ्चिन्मते वाणेश्वर विद्यालङ्कारस्य )

( १३८ )

चन्द्रे या कृष्णरेखा सा तस्य न दोषचिह्नमित्याह —

त्वत्कीर्त्तिशीतकिरणेऽभ्युदितेऽतिसाध्वी
रोहिण्यपि स्वपतिसंशयजातशङ्का ।
श्रीवर्द्धमाननृप कज्जललाञ्छनेन
प्रेयासमाङ्कयदसौ न विधौ कलङ्क. ॥
( जयगोपाल तर्कालङ्कारस्य )

———

## वीरबलः।

( १३८ )

जम्बुद्वीपपुरप्रकाशनकरी स्नेहच्चमाधायिनी
नीत्युद्गीर्णमसीततिः खलजनश्रेणीपतङ्गान्तकृत्।
गाजीन्द्राकबरक्षितीश्वरवरस्वान्तान्धकारापहा
धन्या वीरबलस्य भारतगृहे दीपोपमा लेखनी ॥

---

## (ख) मुसलमान-नवाबगणः।

## आलीवर्द्दिः।

( १४० )

गुप्तपल्लीवास्तव्य कविकुलतिलको वाणेश्वरविद्यालङ्कारस्तदानीं कवित्वेन समयवङ्गाधिपति नवाबालिवर्द्दि, नवद्वीपाधिपति महाराज कृष्णचन्द्र, कलिकाता शोभाबाजार निवासिन भूपति नवकृष्णाश्च परं परितोषयामास। अथैकदा स स्वस्य चित्त सम्बोध्य इदमुवाच .—

आलीवर्द्दिनवाबमप्यथ नवद्वीपेश्वरञ्चाश्रितं
तत्पश्चान्नवकृष्णभूपतिममुं रे चित्त वित्ताशया।
सर्वत्रैव नवेतिशब्दघटितं त्वञ्चेत् कमालम्बसे
तद् देवं परमार्थदं नवघनश्यामं कथं मुञ्चसि ॥
( वाणेश्वर विद्यालङ्कारस्य )

---

## सिराजद्दौला ।

( १४१ )

उपरते आलीवर्द्दिनवावे तद्दौहित्रः मनसुर्-उल्-मुल्क-सिराजद्दौला नवावो ब्राह्मण-पण्डितान् निमन्त्रयितुमिच्छन् श्लोकरचनार्थं महाराजं कृष्णचन्द्रमनुरुरुधे। स च श्लोकमिमं तदन्तिके प्रेषयामास :—

खोदापादारविन्दद्वयभजनपरो मातृतातो मदीय
आलीवर्द्दीनवावो विविधगुणयुतोऽल्लामुखः पश्चिमास्यः ।
भर्त्त्यं देहं जहौ स्वं मुनसरमुलुकः सीरजद्दौलनामा
याचेऽहं मां भवन्तो गलधृतवसनः शुद्धतां संनयन्ताम् ॥

( बाणेश्वर विद्यालङ्कारस्य )

---

## ( ग ) मोगलसम्राड्गणः ।

### बाबरः ।

( १४२ )

वैकुण्ठाभिप्रणीतः कमलयुतगिराः कुञ्जराकृष्टदृष्टिः
कोदण्डोदारनामाप्यमितपरिजनो विश्वविख्यातकीर्त्तिः ।
सुन्दर्य्यासक्तचित्तः समरणविजयी कङ्कणाहारयुक्तो
वीर श्रीबाबराख्य त्वमिव तव रिपुर्हन्त मुक्तादिवर्णः ॥

( शालिकनाथस्य )

---

## आकबरः ।

( १४३ )

कर्णाटं देहि कर्णाधिकविधिविहितत्याग लाटं ललाट-
प्रोत्तुङ्ग द्राविडं वा प्रबलभुजबलप्रौढ़मागाढ़राढ़म् ।
प्रस्फूर्ज्जद्गुर्ज्जरं वा दलितरिपुवधूगर्भं वैदर्भकं वा
गाजी राजीवदृष्टे कुशलमथवा साहजल्लालुदीन ॥
( नायकगोपालस्य )

---

## सेरसाहः ।

( १४४ )

कस्याश्चिद् वाचि कैश्चिन्नु यदि निहितं दूषणं दुष्टचित्तैः
किं मालिन्यं तदा स्यात् प्रथितगुणवतां काव्यकोटीश्वराणाम् ।
वाहाश्चेद् गन्धवाहाधिकविहितजवाः पञ्चषाश्चाश्वखञ्जाः
का हानिः सेरसाहक्षितिपतितिलकस्याश्वकोटीश्वरस्य ॥
( भट्टमल्लस्य )

---

## जाहाङ्गीरः ।

( १४५ )

श्यामं यज्ञोपवीतं तव किमिति मषीषद्ममात् कुत्र जातः
सोऽयं निम्नांशुकन्यापयसि कथमभूत् तज्जलं कज्जलाभम् ।
व्याकुप्यन्नूरदीनक्षितिरमणरिपुक्षौणिभृत्पक्ष्मलाक्षी-
लक्षाक्षीणाश्रुधारासमुदितसरितां सर्वतः सङ्गमेन ॥
( पण्डितराज जगन्नाथस्य )

## साजाहानः ।

( १४६ )

भूमीनाथ सहाजहान भवतस्तुल्यो गुणानां गणै-
रेतद्भूतभवप्रपञ्चविषये नास्तीति किं ब्रूमहे ।
धाता नूतनकारणैर्यदि पुनः सृष्टिं नवां भावये-
न्न स्यादेव तथापि तावकतुलालेशं दधानो नरः ॥
( पण्डितराज जगन्नाथस्य )

( १४७ )

शास्त्राण्याकलितानि नित्यविधयः सर्वेऽपि सम्भाविता
दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः ।
सम्प्रत्युज्झितवासनं मधुपुरीमध्ये हरिः सेव्यते
सर्वं पण्डितराजराजितिलकेनाकारि लोकाधिकम् ॥
( पण्डितराज जगन्नाथस्य )

---

## दारा ।

( १४८ )

अनुकूलभावमथवा
प्रतिकूलत्वं सहैव नरलोके ।
अन्योन्यविहितमन्त्रौ
विधिदाराभूपती वहतः ॥
( पण्डितराज जगन्नाथस्य )

( १४९ )

माहात्म्यस्य परोऽवधिर्निजगृहं गम्भीरतायाः पिता
रत्नानामहमेक एव भुवने को वापरो मादृशः ।
इत्येवं परिचिन्त्य मा स्म सहसा गर्वान्धकारं गमो
दुग्धाब्धे भवता समो विजयते दाराधरावल्लभः ॥
( पण्डितराज जगन्नाथस्य )

## कवि-समष्टिः ।

( १५० )

माघश्चोरो मयूरो मुररिपुरपरो भारविः सारविद्यः
श्रीहर्षः कालिदासः कविरथ भवभूत्याह्वयो भोजराजः ।
श्रीदण्डी डिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटो भट्टबाणः
ख्यातायान्ये सुबन्धादय इह कृतिभिर्विश्वमाह्लादयन्ति ॥

( १५१ )

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥
( प्रसन्नराघवकारजयदेवस्य

( १५२ )

शीलाविज्जामारुलामोरिकाद्याः
काव्यं कर्तुं सन्ति विज्ञाः स्त्रियोऽपि ।
विद्यां वेत्तुं वादिनो निर्विजेतुं
विश्वं वक्तुं यः प्रवीणः स वन्द्यः ॥
( धनदेवस्य )

( १५३ )

वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुते ।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्द्धन-
स्पर्द्धी कोऽपि न विश्रुतः श्रुतधरो धोयी कविक्ष्मापतिः ॥
( गीतगोविन्दकारजयदेवस्य )

( १५४ )

गोवर्द्धनश्च शरणो जयदेव उमापतिः ।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च ॥
( गीतगोविन्दकारजयदेवस्य )

( १५५ )

भासो रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कवि-
र्मेण्ठो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः ।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते ॥

(राजशेखरस्य)

---

## विशिष्ट-कविः ।

## कालिदासः ।

( १५६ )

कवयः कालिदासाद्याः कवयो वयमप्यमी ।
पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥

(कृष्णभट्टस्य)

( १५७ )

अहो मे सौभाग्यं मम च भवभूतेश्च भणितं
तुलायामारोप्य प्रतिफलति तस्मिन् लघिमनि ।
गिरां देवी साक्षात् श्रुतिकलितकह्लारकलिका-
मधूलीमाधुर्यं क्षिपति परिपूर्त्यै भगवती ॥

(कालिदासस्य)

---

## दण्डी ।

( १५८ )

जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् ।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥

( १५९ )

त्रयोऽग्नयस्त्रयो देवास्त्रयो वेदास्त्रयो गुणाः ।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥
( राजशेखरस्य )

---

## पण्डितराज जगन्नाथः ।

( १६० )

कवयति पण्डितराजे
कवयन्त्यन्येऽपि विद्वांसः ।
नृत्यति पिनाकपाणौ
नृत्यन्त्यन्येऽपि भूतवेतालाः ॥
( पण्डितराज जगन्नाथस्य )

---

( १५५ )

भासो रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कवि-
र्मेण्ठो भारविकालिदासतरलाः स्कन्धः सुबन्धुश्च यः ।
दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः
सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते ॥

( राजशेखरस्य )

---

## विशिष्ट-कविः ।

## कालिदासः ।

( १५६)

कवयः कालिदासाद्याः कवयो वयमप्यमी ।
पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥

( कृष्णभट्टस्य )

( १५७ )

अहो मे सौभाग्यं मम च भवभूतेश्च भणितं
तुलायामारोप्य प्रतिफलति तस्मिन् लघिमनि ।
गिरां देवी साक्षात् श्रुतिकलितकल्हारकलिका-
मधूलीमाधुर्यं क्षिपति परिपूर्त्यै भगवती ॥

( कालिदासस्य )

---

## दण्डी ।

( १५८ )

जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् ।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥

( १५९ )

त्रयोऽग्नयस्त्रयो देवास्त्रयो वेदास्त्रयो गुणाः ।
त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥
( राजशेखरस्य )

---

## पण्डितराज जगन्नाथः ।

( १६० )

कवयति पण्डितराजे
कवयन्त्यन्येऽपि विद्वांसः ।
नृत्यति पिनाकपाणौ
नृत्यन्त्यन्येऽपि भूतवेतालाः ॥
( पण्डितराज जगन्नाथस्य )

---

## पाणिनिः ।

( १६१ )

स्वस्ति पाणिनये तस्मै यस्य रुद्रप्रसादतः ।
आदौ व्याकरणं काव्यमनु जाम्बवतीजयम् ॥

( राजशेखरस्य )

---

## बाणभट्टः ।

( १६२ )

श्लेषे केचन शब्दगुम्फविषये केचिद् रसे चापरे-
ऽलङ्कारे कतिचित् सदर्थविषये चान्ये कथावर्णने ।
आः सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरी-
सञ्चारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः ॥

( चन्द्रदेवस्य )

( १६३ )

हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां
श्रीहर्षेण समर्पितानि गुणिने बाणाय कुत्राद्य तत् ।
या बाणेन तु तस्य सूक्तिविसरैरुट्टङ्किताः कीर्त्तय-
स्ताः कल्पप्रलयेऽपि यान्ति न मनाङ् मन्ये परिम्लानताम् ॥

---

## भवभूतिः ।

( १६४ )

सुबन्धौ भक्तिर्नः क इह रघुकारे न रमते
धृतिर्दाक्षीपुत्रे हरति हरचन्द्रोऽपि हृदयम् ।
विशुद्धोक्तिः शूरः प्रकृतिमधुरा भारविगिर-
स्तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते ॥
( सदुक्तिकर्णामृते )

---

## भारविः ।

( १६५ )

भारवेर्भा रवेर्भाति यावन्माघस्य नोदयः ।
उदिते तु पुनर्माघे भारवेर्भा रवेरिव ॥

---

## माघः ।

( १६६ )

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः ॥

( १६७ )

माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे ।
स्मरन्तो भारवेरेव कवयः कपयो यथा ॥
( धनपालस्य )

---

## मातङ्गदिवाकरः ।

( १६८ )

अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः ।
श्रीहर्षस्याभवत् सभ्यः समो बाणमयूरयोः ॥
(राजशेखरस्य)

---

## मुरारिः ।

( १६९ )

देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।
अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता-
मापातालनिमग्नपीवरवपुर्जानाति मन्थाचलः ॥

---

## यशोवर्मा ।

( १७० )

कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ॥
(राजतरङ्गिण्याम्)

---

## वाल्मीकिः ।

( १७१ )

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ।

( रामानुजस्य )

( १७२ )

कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् ।
चन्द्रिकामिव चिन्वन्तु चकोरा इव कोविदाः ॥

( शार्ङ्गधरस्य )

---

## विकटनितम्बा ।

( १७३ )

के वैकटनितम्बेन गिरां गुम्फेन रञ्जिताः ।
निन्दन्ति निजकान्ताना न मौग्ध्यमधुरं वचः ॥

( राजशेखरस्य )

---

## व्यासः ।

( १७४ )

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शम्भुर्भगवान् बादरायणः ॥

---

श्रीहर्षः ।

( १७५ )

तावद् भा भारवेर्भाति यावन्माघस्य नोदयः ।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः ॥

---

जन्तुवर्गः ।

अश्वः ।

( १७६ )

जवेन धावितो वाजी विभिद्य वायुमण्डलम् ।
तस्य संक्षेपतः पूर्वमेव प्रत्यागतः पुनः ॥

( १७७ )

आकर्षन्निव गां वमन्निव खुरौ पयाहंसुञ्जन्निव
स्वीकुर्वन्निव खं पिबन्निव दिशो वायूंश्च मुष्णन्निव ।
साङ्गारप्रकरां सृजन्निव भुवं छायाममर्पन्निव
प्रेङ्खन्नामरवीज्यमानवदनः श्रीमान् हयो धावति ॥
( सिंहदत्तस्य, केषाञ्चिन्मते नकुलस्य )

---

## इल्लिशः ।

( १७८ )

कश्चिद् इल्लिशभक्तः कविरिल्लिशं स्तौति —

विश्वाधारो हि वायुस्तदुपरि कमठस्तत्र शेषस्ततो भू-
स्तस्यां कैलासशैलस्तदुपरि भगवान् मस्तके तस्य गङ्गा।
स्निग्धः पीयूषतुल्यस्तदुदरकुहरे ह्यिल्लिशोऽकिल्बिषोऽस्ति
माहात्म्यं तस्य को वा प्रकथयितुमलं भक्षणाद् यस्य मुक्तिः ॥

( कविचन्द्रस्य )

---

## उष्ट्रः ।

( १७९ )

रूक्षं वपुर्न च विलोचनहारि रूपं
न श्रोत्रयोः सुखदमारटितं कदापि ।
इत्थं न साधु तव किञ्चिदिदञ्च साधु
तुच्छे रतिः करभ कण्टकिनि द्रुमे यत् ॥

( धर्मकीर्त्तेः )

---

## काकः ।

( १८० )

स्थानमहिम्ना अशोभनान्यपि वस्तूनि शोभनानि भवन्तीत्याह —

माकन्दं मकरन्दतुन्दिलममुं गाहस्व काक स्वयं
कर्णारुन्तुदमन्तरेण रणितं त्वां कोकिलं मन्महे ।

रम्याणि स्थलसौहृदेन कतिचिद् वस्तूनि कस्तूरिका
नेपालक्षितिपालभालमिलिते पङ्के न शङ्केत कः ॥

( १८१ )

किं केकीव शिखण्डमण्डिततनुः किं कीरवत् पाठकः,
किं वा हंस इवातिमन्दसुगतिः सारीव किं सुस्वरः ।
किं वा हन्त शकुन्तराजपिकवत् कर्णामृतं भाषते
काकः केन गुणेन काञ्चनमये संरक्षितः पिञ्जरे ॥

---

कोकिलः ।

( १८२ )

अपसर परभृत दूरं
गोष्ठीयं काकरवरसिका ।
दूर्वाचर्वणदक्षा
इक्षुं मधुरं न जानते गावः ॥

( १८३ )

भ्रातः कोकिल भीतभीत इव किं पत्रावृतो वर्त्तसे
नीचैः पश्य सखे शरासनकरा धावन्ति भिल्लार्भकाः ।
का भीतिस्तव यत् कुहूरिति परा विद्या सुधास्यन्दिनी
किं क्रूरे गुणगौरवं किमसतीचित्ते पतिप्रेम वा ॥

---

## चक्रवाकः ।

( १८४ )

अस्तं गतोऽयमरविन्दवनैकबन्धुः
सूर्यो न लङ्घयति कोऽपि विधेरनुज्ञाम् ।
हे चक्र धैर्यमवलम्बय विमुञ्च शोकं
धीरास्तरन्ति विपदं न कदाप्यधीराः ॥

---

## चक्रवाकी ।

( १८५ )

रात्रौ व्याधेन पञ्जरबद्धायाश्चक्रवाक्या चक्रवाकं प्रति उक्तिरियम् —

श्लाघ्या बन्धनवेदना चरणयोः श्लाघ्या निराहारता
श्लाघ्यश्चाप्युपकारकारणतया मृत्युर्द्वयोरावयोः ।
शर्वर्या प्रियसङ्गमो मम कुले स्वप्नेऽपि नैव श्रुतो
व्याधः साधुरसौ प्रजापतिलिपिर्व्यर्थीकृता येन हि ॥

---

## चातकः ।

( १८६ )

वापी स्वल्पजलाशया विषमयो नीचावगाहो ह्रदः
क्षुद्रात् क्षुद्रतरो महाजलनिधिर्गण्डूष एको मुनेः ।
गङ्गाद्याः सरितः पयोनिधिगताः संत्यज्य तस्मादिदं
सम्मानी खलु चातको जलमुचामुच्चैर्जलं वाञ्छति ॥

( १८७ )

गङ्गाजले प्रवमानं म्रियमाणञ्च कञ्चित् चातकं प्रति कस्यचिद् उक्तिरियं, पुनश्च तं प्रति चातकस्य प्रत्युक्तिः —

रे रे चातक पातितोऽसि मरुता गङ्गाजले चेत् तदा
पेयं नीरमशेषपातकहरं काशा पुनर्जीवने ।
मैवं ब्रूहि लघीयसी यमभयादुज्जीवितासुज्झता
गङ्गाम्भ पिबता मया निजकुले किं स्थाप्यते दुर्यशः ॥

---

## धेनुः ।

( १८८ )

स्तन्यं पाययन्तीं धेनुं पिबन्तं वत्सञ्च स्वभावोक्त्या वर्णयति —

आहत्याहत्य मूर्द्ध्ना द्रुतमनुपिबतः प्रस्नुतं मातुरूधः
किञ्चित् कुब्जैकजानोरनवरतचलच्चारुपुच्छस्य धेनुः ।
उत्तीर्णं तर्णकस्य प्रियतनयतया दत्तहुङ्कारमुद्रा
विष्योतत्क्षीरधारालवशबलमुखस्याङ्गमातृप्ति लेढ़ि ॥
( मयूरस्य )

---

## वकः ।

( १८९ )

न भ्रूणां स्फुरणं न चञ्चुचलनं नो चूलिकाकम्पनं
न ग्रीवावलनं मनागपि न यत् पक्षद्वयोत्क्षेपणम् ।
नासाग्रेक्षणमेकपाददमनं कष्टैकनिष्ठं परं
यावत् तिष्ठति मौनहीनवदनस्तावद् बकध्यानम् ॥

---

भेकः ।

( १८० )

गङ्गादीनां सकलसरितां प्राप्य तोयं समुद्रः
किञ्चिद् गर्वं न भजति महान् दिव्यरत्नाकरोऽपि ।
एको भेकः परममुदितो गोष्पदाम्भोऽपि गत्वा
को मे को मे रटति बहुशोऽखर्वगर्वेण नीचः ॥

---

भ्रमरः ।

( १८१ )

अपसर मधुकर दूरं
परिमलबहुलेऽपि केतकीकुसुमे
इह नहि मधुलवलाभो
भवति परं धूलिधूसर वदनम् ॥

(

अनुसरति करिकपोलं
भ्रमरः श्रवणेन ताड्यमानोऽपि ।
गणयति न तिरस्कारं
दानान्धितलोचनो नीचः ।

## मत्स्यरङ्गः ।

( १८३ )

कविर्मत्स्यरङ्गमुपजीव्य किञ्चिल्लाभाशया बहुविघ्नसङ्कुले कर्मणि न प्रवर्तेत इत्युपदिशति :—

घोरं वारि न चिन्तितं न गणिता नक्रादयो भीषणा-
श्चञ्चत्तुङ्गतरङ्गडम्बरपरित्रासोऽपि ,नालोचितः ।
मध्येऽम्भोनिधि मत्स्यरङ्ग भवता झम्पः कृतोऽयं सुधा
सम्पद्येत् शफरार्जनं विपदिह प्राणप्रयाणावधिः ॥

---

## मशकः ।

( १८४ )

काचिद् विदुषी रमणी रात्रौ मशकपीडनमसहमाना प्रोषित भर्तारमुद्दिश्य श्लोकमिम लिखित्वा प्रेषयामास :—

जितधूमसमूहाय जितव्यजनवायवे ।
मशकाय मया काय, सायमारभ्य दीयते ॥

( जयन्तीदेव्याः )

---

## मत्कुणः ।

( १८५ )

बहुलाभप्रत्याशया दूरदेशवर्तिनमविदितदाक्षिण्यं कञ्चित् धनिनमुपगम्य स्वकीयं— वर्ता भिक्षुकाणामियमुक्तिः :—

स्थूलतया नीलतया
दूरतया दानलोलुपैर्मधुपैः ।
धावितमिभराजधिया
हन्तासीदन्ततो महिषः ॥

---

## राघवः ।

( १८६ )

यस्मिन् वेल्लति सर्वतः परिचलत्कल्लोलकोलाहलै-
र्मन्थाद्रिभ्रमणभ्रमं हृदि हरिद्दन्तावलाः पेदिरे ।
सोऽयं तुङ्गतिमिङ्गिलाङ्गकवलीकारक्रियाकोविदः
क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघवः ॥

---

## शङ्खः ।

( १८७ )

कीदृगिदं कुटिलोऽन्तः
कठिनः क्षाराम्बुसम्भवः शून्यः ।
शङ्खः श्रीपतिनिकटे
केन गुणेन स्थितिं लेभे ॥

( शार्ङ्गधरस्य )

## शफरः ।

( १९८ )

बहुविदग्धधिष्ठिते सदसि पण्डितंमन्यस्य कस्यचिद् वाचालतामाकर्ण्य कविराह —

शफर संहर चञ्चलतामिमां
　　द्रुतमगाधजलप्रणयी भव ।
इह हि कूजितमञ्जुलजालके
　　वसति दुष्टबकः सकुटुम्बकः ॥

---

## शुकः ।

( १९९ )

उच्चैरेष तरुः फलञ्च विपुलं दृष्ट्वैव हृष्टः शुकः
　　पक्वं शालिवनं विहाय जडधीस्तन्नारिकेलं गतः ।
तत्रारुह्य बुभुक्षितेन मनसा यत्नः कृतो भेदने
　　चाशा तस्य न केवलं विदलिता चञ्चुर्गता चूर्णताम् ॥

---

## सर्पः ।

( २०० )

यस्य कतिचिद् दोषाः सन्ति तादृशं जनं सर्पवर्णनमुखेनाधिक्षिपति —

मौनी सन्मणयो गृहं गिरिगुहा त्यागः किलामलत्वचो
　　निर्यल्लोपनतैव वृत्तिरनिलैरेकत्र पर्यटशो ।

अन्यत्रानृजुवर्तिता द्विरसना वक्त्रे विषं वीक्षणं
सर्वामङ्गलसूचकं कथय भो भोगिन् सखे किं न्विदम् ॥
( जीवनागस्य )

---

## सिंहः ।

( २०१ )

नास्योच्छ्रायवती तनुर्न दशनौ दीर्घौ न दीर्घः करः
सत्यं वारण येन केशरिशिशुस्त्वां स्पर्द्धते नित्यशः ।
तेजोबीजमजेयमस्य हृदये न्यस्तं पुनर्वेधसा
तादृक् त्वादृशमेव येन सुतरां भोज्यं पशुं मन्यते ॥
( आनन्दवर्द्धनस्य )

---

## हंसः ।

( २०२ )

कोऽपि सर्वत्र समदर्शिनस्तत्त्वविदो विकारहेतुर्न भवतीत्याह —

गाङ्गमस्तु सितमस्तु यामुनं
कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता
चीयते न च न चापचीयते ॥

( २०३ )

गतं तद् गाम्भीर्यं तटमपि चितं जालिकशतैः
सखे हंसोत्तिष्ठ त्वरितममुतो गच्छ सरसः ।
न यावत् पङ्कान्तःकलुषिततनुर्भूमिविलसद्-
बकोऽसौ वाचालश्चरणयुगलं मूर्ध्नि कुरुते ॥

---

## हस्ती ।

( २०४ )

सञ्चर करिवर धीरं
मा मर्दय मर्मराणि पत्राणि ।
इह पुरतो गिरिकुहरे
किमु सुखशायी न गोचरः सिंहः ॥

( २०५ )

नाभूवन् भुवि यस्य कुत्रचिदपि स्पर्द्धाकराः कुञ्जराः
सिंहेनापि न लङ्घिता किमपरं यस्योद्धता पद्धतिः ।
कष्टं सोऽपि कदर्थ्यते करिवर स्फाररवैः फेरवै-
रापातालगभीरपङ्कपटलीमग्नोऽद्य भग्नोद्यमः ॥
( विद्यापतेः )

---

## उद्भित्-तरङ्गः ।

### सामान्य-वृक्षः ।

( २०६ )

ये पूर्वं परिपालिताः फलदलच्छायादिभिः प्राणिनो
विश्रामद्रुम कथ्यतां तव विपत्काले क्व ते साम्प्रतम् ।
एताः सङ्गतिमात्रकल्पितपुरस्कारास्तु धन्यास्त्वचो
यासां छेदनमन्तरेण पतितो नायं कुठारस्त्वयि ॥

---

### आम्रः ।

( २०७ )

त्रपाश्यामा जम्बूः स्फुटितहृदयं दाडिमफलं
सशूलं संधत्ते हृदयमभिमानेन पनसम् ।
अभूदन्तस्तोयं तरुशिखरजं लाङ्गलिफलं
समायाते चूते जगति रसराजे रसमये ॥

---

### कदलः ।

( २०८ )

वल्कं श्राद्धविधायकं तव फलं देवादिसन्तर्पणं
पुष्पं व्यञ्जनमुत्तमं परिभवेद् मूलं दरिद्रादनम् ।
पत्रं भोजनसौख्यदं किमपरं घातेन सृष्टं पटं
धन्यस्त्वं कदलीतरो परहिते यद् देहपातः पणः ॥

( २०८ )

धिग् दैवं कदली झटित्युपहतिं कर्त्तुं क्षमा लोलया
शाखापत्रफलैश्च मूलकुसुमैस्त्वग्भिर्न जीवेच्चिरम्
शाखोटः करटालयोऽप्यसरलं काष्ठं न तुष्टिप्रदं
प्रायो भूतनिकेतनं कथमसौ दीर्घायुरेवं तरुः ॥

---

कल्पवृक्षः ।

( २१० )

औदार्य्यं भुवनत्रयेऽपि विदितं सम्भूतिरम्भोनिधे-
र्वासो नन्दनकानने परिमलो गीर्वाणचेतोहरः ।
एवं दातृगुणोत्करः सुरतरोः सर्वोऽपि लोकोत्तरः
स्यादर्थिप्रवरार्थितार्पणविधाविको विवेको यदि ॥

---

चन्दनः ।

( २११ )

वासः शैलशिलान्तरेषु सहजः सङ्गो भुजङ्गैः सह
प्रेङ्खत्तुषारपयोधिवीचिभिरभूद्दुष्टसेकक्रिया ।
जानीमो न वयं प्रसीदतु भवान् श्रीखण्ड तत् कथ्यतां
कस्मात्ते परतापखण्डनमहापाण्डित्यमभ्यागत

---

## चम्पकः ।

( २१२ )

चम्पकेषु भ्रमरा नासते इति मनसिकृत्य आह —

यन्नादृतं त्वमलिना मलिनाशयेन
किं तेन चम्पक विषादमुरीकरोषि ।
विश्वाभिरामनवनीरदनीलवेशाः
केशाः कुशेशयदृशां कुशलीभवन्तु ॥

( २१३ )

कम्पं चम्पक मुञ्च याचकजनैरायासितस्त्वं सखे
मा स्रासीः परितो विलोकय तरून् कस्ते विधत्ते तुलाम् ।
स्वार्थेचेतसि कोप एव नितरां धात्रे सदा कुप्यतां
येन त्वं हि सुवर्णवर्णकुसुमामोदोऽद्वितीयः कृतः ॥

---

## ताम्बूलम् ।

( २१४ )

ताम्बूलं गदराशिनाशनिपुणं दुर्गन्धविध्वंसनं
रुच्यं जाठरवह्निवृद्धिजननं सुखप्रसंवर्द्धनम् ।
आस्यालङ्करणं विनोदसदनं संवर्द्धनामूचनं
रागेणैव विभातु तस्य नियतं श्रीपूर्णचन्द्राननम् ॥
( उद्भटसागरस्य )

## तालः ।

( २१५ )

अध्वन्यध्वान भूरुहः फलभृतो नम्रानुपेक्ष्यादराद्
दूरादुन्नतिसंश्रयव्यसनिनः पान्थस्य मुग्धात्मनः ।
स्वं मूलं समुपागतस्य मधुरच्छायाफलैः का कथा
ग्रीवोनापि हि नोपयोगमगमत् पर्णेन तालद्रुमः ॥

## तृणम् ।

( २१६ )

उत्तुङ्गैस्तरुभिः किमेभिरखिलैराकाशसंस्पर्द्धिभि-
र्धन्योऽसौ नितरामुलूपकचयो नद्यास्तटेऽवस्थितः ।
एवं यः शतमुद्धिरदतजलव्यालोलवीचीवशाद्
मज्जन्तं जनमुद्धरेत सहसा तेनैव मज्जेच्च वा ॥
( रामकस्य )

## धुस्तूरः ।

( २१७ )

उन्मत्त धूर्त्त तरुणेन्दुनिवासयोग्ये
स्थाने पिशाचपतिना विनिवेशितोऽसि
किं कैरवाणि विकसन्ति तमः प्रयाति
चन्द्रोपलो द्रवति वार्द्धिरुपैति वृद्धिम् ।

## निम्बः ।

( २१८ )

आम्रं प्रति निम्बस्योक्तिः :—

निम्बो हि तिक्तः खलु कष्टभोज्य-
स्तथापि सेव्यो हितकृद् यतोऽसौ ।
किं मां न जानासि रसाल गर्वा-
ज्जगन्निवासस्य निवासबीजम् ॥

---

## पद्मम् ।

( २१८ )

तत्त्वानभिज्ञो हि प्रायशो वास्तवं वस्तु अन्यथा कल्पयतीति दर्शयितुं कविः पद्मिनी-वचनमुपन्यस्यति :—

भानुः शोषयितुं समेति गगनं सज्जीवनं जीवनं
तस्याहं नलिनी प्रसारितदला गोप्तुं खरांशोः करात् ।
तत् क्लेशानपनेतुमस्तगमिते भानौ सदा मुद्रिता
मिथ्ये या मम मित्रता स्वयमृते जानाति तां को जनः ॥

( २२० )

एकदा राजा कृष्णचन्द्रः वाणेश्वरविद्यालङ्कारेण सह सरसीरे परिभ्रमन् पद्ममेकमव-लोक्य कविवरं कथितवान् महात्मन् एवंविधं पदार्थं रचय श्लोकमेकं यस्मिन् पद्मस्य निन्दा । विद्यालङ्कारश्च तदैव श्रावितवान् :—

( क ) पद्म-प्रशंसा।

हे पद्मिनीपत्र भवच्चरित्रं
चित्रं प्रतीमो वयमत्र किञ्चित्।
त्वं पङ्कजन्मापि यदच्छभावा-
दपि स्पृश्यस्यम्बु न पङ्कसङ्गि ॥
( वाणेश्वर विद्यालङ्कारस्य )

( ख ) पद्म-निन्दा।

रे पद्मिनीदल तवात्र मया चरित्रं
दृष्टं विचित्रमिव यद् विदितं ध्रुवं तत्।
यैरेव शुद्धसलिलैः परिपालितं त्वं
तेभ्यः पृथग् भवसि पङ्कभवं यतोऽसि ॥
( शार्ङ्गधरस्य )

( २२१ )

देशान्तरगमनोन्मुख प्रियतममुद्दिश्य तत्प्रियतमा कथयोक्तिं भ्रमरेणाह —

अस्तं गच्छसि गच्छ वर्त्मनि तव स्वस्त्यस्तु भोः सर्वथा
वक्तव्यं कियदस्ति मेऽत्र जगदानन्दैकसिन्धो रवे।
नाहं कैरविणी न चास्मि रजनी यत्प्रीतिरिन्दूदये
पद्मिन्या न गतिर्विना दिनमणिं स्मर्त्तव्यमेतत् त्वया ॥

---

## पलाण्डुः ।

( २२२ )

कर्पूरधूलीरचितालवालः
कस्तूरिकाकुङ्कुमलिप्तदेहः ।
सुवर्णकुम्भैः परिषिच्यमानो
गन्धं निजं मुञ्चति किं पलाण्डुः ॥

---

## वदरी ।

( २२३ )

श्रीमन् वसन्त भवतोऽभ्युदये तरूणां
के नाम नो सुफलपल्लवशालिनः स्युः ।
अस्माकमल्पतपसां वदरीतरूणां
भ्रष्टं फलं वत शिखाऽपि जनैर्विलूना ॥

---

## मन्दारः ।

( २२४ )

न हि च्छायादानात् पथिकजनसन्तापहरणं
फलैर्वा पुष्पैर्वा नहि सुरनरप्रीतिजननम् ।
इदन्ते मन्दारद्रुम सहजमेतत्त्वनुचितं
हतीभूतो रथ्यापरमपरेषां फलमपि ॥

## शालिः ।

( २२५ )

येनैते जनिता वयं प्रतिदिनं स्नेहेन संवर्द्धिता
येनाकृत्तृणपीडनं न सहितं शतं स एव स्वयम् ।
छेत्तुं नः कथमद्य वाञ्छति शिरो मत्वेति नम्रानना:
क्रन्दन्तीव तुषारवाष्पविगलद्बिन्दुच्छलाच्छालयः ॥

---

## शाल्मलिः ।

( २२६ )

हंसाः पद्मवनाशया मधुलिहो माध्वीकलाभाशया
यान्याः स्वादुफलाशया बलिभुजो गृध्राश्च मांसाशया ।
दूराविष्फलरक्तपुष्पनिकरैर्निःसार मिथ्योन्नते
रे रे शाल्मलिपादप प्रतिदिनं के न त्वया वञ्चिताः ॥

---

## स्वभावोक्ति-तरङ्गः।

### (क) पर्वतः।

#### मन्दरः।

( २२७ )

सुरारातिर्लक्ष्मीं त्रिपुरविजयी शीतकिरणं
करीन्द्रं पौलोमीपतिरपि स लेभे जलनिधेः।
त्वया किं वा लब्धं कथय मथने मन्दरगिरे
शरण्यः शैलानां यदयमददाद् रत्ननिलयः॥

#### मलयः।

( २२८ )

विख्याताः कति सन्ति भूधरगणाः श्लाघ्योऽसि भूमण्डले
याताश्चन्दनतां यतो विटपिनः सर्वे तवैवाश्रयात्।
किन्त्वेकं मलय त्वदीयमयशो लोकैरिदं गीयते
यत् शाखोटरशालसालबकुले नासीद् विशेषग्रहः॥

---

मैनाकः ।

( २२८ )

वरं पक्षच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे
न चासौ सम्पातः पयसि पयसां पत्युरुचितः ॥

---

विन्ध्यः ।

( २३० )

आचक्ष्महे तव किमद्यतनीमवस्थां
हा तस्य विन्ध्य शिखरस्य महोन्नतस्य ।
यत्रैव सप्तमुनयस्तपसा निषेदुः
सोऽयं विलासवसतिः शिशिताशनानाम् ॥

---

सुमेरुः ।

( २३१ )

ये सन्तोषसुखप्रबुद्धमनसस्तेषामभिन्ना मुदो
ये चान्ये धनलोभसङ्कुलधियस्तेषां हि भिन्ना नृणाम् ॥
इत्थं कस्य कृते कृतश्च विधिना तादृक् पदं सम्पदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥

( सुतसूनोर्विद्याधरस्य, केषाञ्चिन्मते विद्यापतेः )

---

### हिमालयः ।

( २३२ )

क्षौणी यस्य हिरण्मयी मणिमयः प्राकारशैलोच्चयः
कुञ्जः कल्पलतामयः सुरधुनीधारामयो निर्झरः ।
किं चेन्द्रादिसमस्तदिक्पतिपुरीं व्याप्नोति यत्पक्षतः
शैलः सोऽपि गिरिर्वयञ्च गिरयस्तत्रैव मे का मतिः ॥

---

## ( ख ) जलाशयः ।

### कूपः ।

( २३३ )

गुणवानपि पूर्णोऽपि कुम्भः कूपे निमज्जति ।
तस्य भारसहो न स्याद् गुणस्य ग्राहको यदि ॥

---

### तड़ागः ।

( २३४ )

पीतं मे सकलं जलं जलनिधिप्रचण्डालचण्डांशुना
गाम्भीर्यं क्व गतं क्व चाम्बुजगणास्ते मे महंसादयः ।
सोढा गाढतमा मया विपदियं नैतत्तु सह्यं मम
तृष्णान्धाः पथिका यदेत्य सहसा हाहारवं कुर्वते ॥

### सागरः ।

( २३५ )

यस्य गृहाद् दरिद्रा भग्नमनोरथाः प्रतिनिवर्तन्ते तस्य सम्पदो व्यर्थैवेत्याह :—

यद् वीचीभिः स्पृशसि गगनं यच्च पातालमूलं
रत्नैरुद्दीपयसि पयसा यत् पिधत्से धरित्रीम् ।
धिक् सर्वं तत् तव जलनिधे यद् विमुच्याऽश्रुधारा-
स्तीरे नीरग्रहणरसिकैरध्वगैरुज्झितोऽसि ॥

( गौराभिनन्दस्य )

---

## ( ग ) ऋतुः ।

### ग्रीष्मः ।

( २३६ )

सुतप्ता सौभाग्यस्खलितवनितावद् वसुमती
विवस्वान् दुष्प्रेक्ष्यो द्रविणमदमत्तस्य मुखवत् ।
समीरो मन्थाद्रिभ्रमणफणभृत्फुत्कृतिसमो
जगद् योगीन्द्राणां नयनमिव निस्पन्दमनिशम् ॥

---

### वर्षाः ।

( २३७ )

घनतरघनवृन्दच्छादिते व्योमलोके
दिनमणिरजनीशौ नाममात्रावशेषौ ।
दिवसरजनिभेदं मन्दवाताः शशंसुः
कमलकुमुदगन्धानाहरन्तः क्रमेण ॥

---

## शरत् ।

( २३८ )

तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः
शृङ्गं रुरुस्त्यजति मित्रमिवाकृतघ्नम् ।
तोयं प्रसीदति मुनेरिव चित्तवृत्तिः
कामी दरिद्र इव शोषमुपैति पङ्कः ॥

## हेमन्तः ।

( २३९ )

वेपन्ते कपयो भृशं जडसमं गोवाजिकं ध्यायति
श्वा चुल्लीकुहरोदरं क्षणमपि प्राप्यापि नैवोज्झति ।
शीतार्त्तिव्यसनातुरः पुनरसौ दीनो जनः कूर्मवत्
स्वान्यङ्गानि शरीर एव हि निजे निह्नोतुमाकाङ्क्षति ॥
( लक्ष्मीधरस्य )

## शिशिरः ।

( २४० )

( क )

कन्याप्रसूतस्य धनुःप्रसङ्गा-
दङ्गाधिकामादितविक्रमस्य ।
धनञ्जयाधीनपराक्रमस्य
हिमस्य कर्णस्य च को विशेषः ॥

( ख )

अलं हिमानीपरिदीर्णगात्रः
समाश्रितः फाल्गुनसङ्गमेन ।
अत्यन्तमाकाङ्क्षितकृष्णवर्त्मा
भीष्मो महात्माजनि माघतुल्यः ॥

वसन्तः ।

( २४१ )

( क )

पतङ्गपाकसमये पतङ्गपतिविक्रमाः ।
पतङ्गस्योदये चेलुः पतङ्गा इव वानराः ॥

( ख )

लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि
( नवीनचन्द्र विद्यारत्नस्य )

## ( घ ) काल-विशेषः ।

### प्रभात-वर्णनम् ।

( २४२ )

परं प्राची पिङ्गा रसपतिरिव प्राश्य कनकं
परिम्लानश्चन्द्रो बुधजन इव ग्राम्यसदसि ।
परिक्षीणास्तारा नृपतय इवानुद्यमपरा
न राजन्ते दीपा द्रविणरहितानामिव गुणाः ॥
( भोजराजकविवर्गस्य )

---

### सूर्योदय-वर्णनम् ।

( २४३ )

राजीवानि विकासयन् कुमुदिनीराजिञ्च संरोदयन्
घूकालीञ्च विभाययन् निजकरैः कोकान् समुल्लासयन् ।
नक्षत्राण्यपसारयन् शशभृतः कान्तिञ्च सङ्कोचयन्
लोकालिञ्च विबोधयन् तरलयन् सूर्यः समुज्जृम्भते ॥
( उद्भटसागरस्य )

## सूर्य्यास्त-वर्णनम् ।

( २४४ )

सीताविरहिणा रामचन्द्रेण अस्तगामिनं सूर्य्यमवलोक्य भग्नमनसा सेतुबन्धनाय विहाय लक्ष्मणं प्रति कथितम् —

( क )

समग्रामादित्यप्रियकमलिनी षट्पदहृतां
विलोक्यान्तर्मोदाद् मृदु कुमुदवृन्दं विहसति ।
रविः खिन्नः पत्न्या हृतनववधूनामयमिदं
निमज्जन्नम्भोधौ कलयति करैरुद्धृततरैः ॥

( ख )*

समुद्रतरणे निरुत्साहं श्रीरामचन्द्रम् अवलोक्य सूर्य्यास्तं प्रदर्श्य तं बोधयति लक्ष्मणः —

समुद्विग्नानस्मानतलजलपारे गतिविधौ
विलोक्य व्यामर्षात् स्वनगतघनोर्मिं विदधतः ।
पयोधेर्गाम्भीर्य्यं कियदिति स आवेदनपरो
निमज्जन्नम्भोधौ कलयति करैरुद्धृततरैः ॥

---

## सन्ध्या-वर्णनम् ।

( २४५ )

रविरस्तं तेजः समुदयति खद्योतपटली
मरालाली मूका कनकलमुलूका विदधति ।
इदं दृष्ट्वा कष्टं परमसहमाना कमलिनी
चिराचिद्रामुद्रामहह तनुते क्लान्तनयना ॥

---

## चन्द्रोदय-वर्णनम् ।

( २४६ )

पाथोजानि निमीलयन् कुमुदिनीजालं समुन्मीलयन्
कोकानाकुलयन् चकोरमिथुनाशंसाश्च सम्पूरयन् ।
ज्योत्स्नां कन्दलयन् तमः कवलयन् सिन्धुं समुद्वेलयन्
लोकानारमयन् धरां धवलयन् सोमः समुज्जृम्भते ॥
(उद्भटसागरस्य)

---

## ङ) शादयः ।

### मणिः ।

( २४७ )

क्षितीशानां कोषान्तरतिमिरदोषक्षयकरः
फणीशानां शीर्षे प्रचुरतरशोभाशुभकरः ।
स एवाहं दैवात् तव करमुपेतो मणिवणिग्
उपेक्षाऽपेक्षा वा तव गुणपरीक्षापरिचयः ॥

---

### शङ्खः ।

( २४८ )

एकोत्पत्ती प्रकृतिधवलौ सुन्दरौ सोमशङ्खौ
शम्भुः सोमं प्रकृतिसुभगं स्वोत्तमाङ्गेन धत्ते ।
शङ्खस्तत्र क्रकचनिकरैर्भिद्यते शङ्खकारैः
को नामान्तःप्रकृतिकुटिलो दुर्गतिं न प्रयाति ॥

---

## स्वर्णम् ।

( २४९ )

स्वर्णस्य खेदोक्तिरियम् :—

न वा ताड़नात् तापनाद् वह्निमध्ये
न वा च्छेदनात् क्लिश्यमानोऽहमस्मि ।
सुवर्णस्य मेऽसह्यदुःखं तदेकं
यतो मां जना गुञ्जया तोलयन्ति ॥

---

( २५० )

दानपात्राणां विद्यादिगुणवत्तया विशेषमकुर्वन्तं धनवन्तं दैवस्य निर्विवेकताव्याजेन तिरस्करोति :—

( क )

धिग् दैवं निर्मलं नेत्रं कृतं कज्जलसंयुतम् ।
सच्छिद्रः समलो वक्रः कर्णः स्वर्णेन भूपितः ॥

( ख )

नायं दैवस्य दोष इति द्वाभ्यां श्लोकाभ्यां कश्चिदाह —

दैवस्य नैव दोषोऽयं गुणः प्रत्युत मन्यते ।
रञ्जितं कज्जलैरक्षि भृङ्गालिभिरिवाम्बुजम् ॥

( ग )

विधिनैवेदमादिष्टं स्वर्णं कर्णगतं भव ।
अजानद्भिस्तदर्थन्तु तेन कर्णावलङ्कृतौ ॥
( एतौ शिवनारायणशिरोमणेः )

---

## मेघः ।

( २५१ )

सत्पात्रेभ्यो धनं दत्त्वा निर्धनस्य दातुर्दारिद्र्यमपि शोभते इत्याह :—

आसिच्य पर्वतकुलं तपनोष्मतप्तं
निर्वाप्य दावविधुराणि च काननानि ।
नानानदीनदशतानि च पूरयित्वा
रिक्तोऽसि यद् जलद सैव तवोत्तमा श्रीः ॥

( २५२ )

धनिनो गृहे बहुषु याचकेषु कृतार्थेषु प्रतिगतेषु तेषामेकस्तत्र तद्दानमनधिगम्य तं धनवन्तमिदमाह :—

हे धाराधर धीर नीरनिकरैरेषा रसा नीरसा-
ऽशेषा पूयकरोत्करैरतिखरैरापूरि भूरि त्वया ।
एकान्तेन भवन्तमन्तरगतं स्वान्तेन सञ्चिन्तय-
न्नाश्चर्यं परिपीडितोऽयमभितो यच्चातकस्तृष्णया ॥

( २५३ )

मेघ त्वं निजजीवनेन जगतः संतृप्तिसंवर्द्धकः
प्रायस्त्वत्सदृशो न कोऽपि भविता भूतोऽथवा विद्यते ।
किन्त्वेकन्त्वसमञ्जसं व्यथयति प्रज्ञावतां मानसं
यन्मण्डूकमयूरमोदनविधौ तुल्यस्तवानुग्रहः ॥

---

## निन्दाप्रशंसा-तरङ्गः ।

## ( क ) निन्दा-तरङ्गः ।

### असन्तोष-निन्दा ।

( २५४ )

भोगवासनैव महतां महत्त्वं दूषयतीत्याह —

आशालताच्छेदनमन्तरेण
भवेदनर्थो महतामवश्यम् ।
भोगप्रसक्तः क्रमशो विवस्वान्
मीनञ्च मेषञ्च वृषञ्च भुङ्क्ते ॥
( कविचन्द्रस्य )

---

### आत्मगौरव-निन्दा ।

( २५५ )

क्षुद्रा एवात्मानं श्लाघन्ते इत्याह —

भेको वक्ति विलङ्घ्य कूपसलिलं को मे हनूमान् पुरो
गन्धर्वं हसति स्वरं खरतरं कृत्वा मुदा गर्दभः ।
खद्योतः परिदर्श्य दीधितिलवं चन्द्रप्रभां निन्दति
क्षुद्रः पश्यति नात्मनोऽधिकमतां मिथ्याभिमानोद्धतः ॥

---

## उदर-निन्दा ।

( २५६ )

श्रीकृष्णस्य स्तोत्रं रचयितुमिच्छुर्वाग्देवतायाः साम्मुख्यमाधत्ते ।—

मातर्नीतः परमनुचितं तत् खलानां पुरस्ता-
दस्माभिस्त्वं जठरपिठरीपूर्त्तये नर्त्तितासि ।
तत् क्षन्तव्यं सहजसरले वत्सले वाणि कुर्य्यां
प्रायश्चित्तं गुणगणनया गोपवेषस्य विष्णोः ॥

---

## कलिकाल-निन्दा ।

( २५७ )

केचिद् वा यदि सन्ति वैदिकरतास्ते विप्रलम्भव्रताः
कारुण्यादिगुणास्तु कुत्र यदि ते वेदक्रियावर्ज्जिताः ।
इत्थं पापकलापदूषिततराः प्रायेण सर्व्वे नराः
सत्यस्यापि तथा न तत् तव कले वाल्येऽपि या वीरता ॥

( राखालदास न्यायरत्नस्य )

( २५८ )

कलौ प्रायशो जनाः स्वधर्म्मे नानुरज्यन्ते इत्याह ।—

न सन्ध्यां सन्धत्ते नियमितनिमाजान् न कुरुते
न वा मौञ्जीबन्धं कलयति न वा 'सुन्नत'विधिम् ।
न रोजां जानीते व्रतमपि हरेर्नैव भजते
न काशी मक्का वा शिव शिव न हिन्दुर्न यवनः ॥

---

## कुपुत्त्र-निन्दा ।

( २५८ )

पित्रोर्नैव वचः शृणोति दिवसेऽतीते व्रजत्यालयं
विद्याभ्यासपराङ्मुखश्च नियतं दुर्बुद्धिमालम्बते ।
बन्धूनामुपदेशवाचि वदति क्रोधैकतानं वचः
साधून् निन्दति दुर्जनश्च मनुते मित्रं कुपुत्त्रो भुवि ॥

---

## कुभृत्य-निन्दा ।

( २६० )

आहारे वडवानलश्च शयने यः कुम्भकर्णायते
सन्देशे बधिरः पलायनविधौ सिंहः शृगालो रणे ।
अन्धो वस्तुनिरीक्षणेऽथ गमने खञ्जः पटुः क्रन्दने
भाग्येनैव हि लभ्यते प्रभुजनैरेवंविधः सेवकः ॥

( २६१ )

आह्वानेषु गृहीतमौननियमः स्तेयव्रते दीक्षितः
पङ्गुः पर्य्यटने निरन्तरमृणार्जलेषु पञ्चाननः ।
निद्रायां खलु कुम्भकर्णविजयो हस्ती तथा भोजने
कोलः शौचविधावयं सुकृतिनां भाग्येन भृत्यो भ

---

## कुवैद्य-निन्दा ।

( २६२ )

न धातोर्विज्ञानं न च परिचयो वैद्यकनये
न रोगाणां तत्त्वावगतिरपि नो वस्तुशुद्धधीः ।
तथाप्येते वैद्या इति तरलयन्तो जड़जना-
नसून् मृत्योर्भृत्या इव वसु हरन्ते च गदिनाम् ॥
( वेङ्कटाध्वरिणः )

## कुसंसर्ग-निन्दा ।

( २६३ )

दुष्टस्य सङ्गतिरनर्थपरम्परायाः
हेतुः सतां भवति किं कथनीयमत्र ।
लङ्केश्वरो हरति दाशरथेः कलत्रं
प्राप्नोति बन्धनमहो किल सिन्धुराजः ॥
( विज्जिकायाः )

## कृतघ्न-निन्दा ।

( २६४ )

दन्तान्तःपरिलग्नदुःखदकणा निःसार्यते जिह्वया
तां हन्तुं सरला सदोद्यमयुता दन्तास्तु हन्तानुजाः ।
आ मूलाद्विपतन्ति दुष्टदशना जिह्वा चिरस्थायिनी
मित्रद्रोहदुरन्तदुष्कृतफलैर्नो मुच्यते कश्चन ॥

## कृपण-निन्दा ।

( २६५ )

सा माता मम भारती प्रतिदिनं लक्ष्म्या विमात्रा सह
मौख्यं विदधाति सापि चपला रुष्टा गृहान्निर्गता ।
तामन्वेषयता मयात्र भवतो द्वारं प्रविष्टं मुदा
मन्ये त्वद्वचमात्र नागतवती स्थानान्तरं गम्यते ॥

( २६६ )

दृढेतरनिबद्धमुष्टेः
कोपनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च
केवलमाकारतो भेदः ॥

( २६७ )

धनस्य सञ्चयवद् दानमपि कार्यमित्याह —

दातव्यं कृतिभिर्धनं न खलु तैः सञ्चीयतां केवलं
दानं न्योमनिकर्णविक्रमरवैः स्यात्तं पृथिव्यां परम् ।
दृष्ट्वा स्वं मधु दानभोगरहितं नष्टं चिरात् सञ्चितं
निर्वेदादिव पाणिपादयुगलं घर्षन्त्यहो मक्षिकाः ॥

---

## गृहविशेष-निन्दा ।

( २६८ )

कृतदाराणां पुंसां प्रायशो बन्धविच्छेदो भवतीत्याह ।—

यस्या जन्मान्यवंशे वसतिरपि सदा दूरदेशे पुरासीत्
सैषा भूत्वा वधूटी प्रकटितविनया वेश्ममध्यं प्रविश्य ।
आजन्मप्राणतुल्यान् गुरुजनजननीसोदरानन्तरङ्गान्
दूरीकृत्य स्वगेहात् पतिमनुरमते धिग् गृहस्थाश्रमं नः ॥

( २६९ )

अन्नचिन्ता हि पुरुषाणां सर्वगुणसंहारिणीत्याह —

तावद् विद्याऽनवद्या गुणगणमहिमा शौर्य्यगाम्भीर्य्यवीर्य्यं
गेहे स्वे सर्वशान्तिः परगुणकथने वाक्पटुत्वं प्रभूतम् ।
यावत् पाकाकुलाभिः स्वगृहयुवतिभिः प्रेषितापत्यवक्त्रा-
द्धा वाचा नास्ति तैलं न च लवणमपीत्यादिवार्त्ता श्रुतिर्न ॥

---

## जामातृ-निन्दा ।

( २७० )

श्वशुरगृहचिरवासिनं जामातरं लक्ष्यीकृत्य कथयति :—

श्वशुरगृहनिवासः स्वर्गवासो धरायां
निवसति ननु कश्चिद् वासरान् पञ्चषांश्चेत् ।
तदधिकमपि तिष्ठेद् दुग्धलुब्धो बिडाल-
स्तदधिकदिनवासे पादुकापूतपृष्ठः ॥

( २७१ )

भारतं पञ्चमो वेदः सुपुत्रः सप्तमो रसः ।
दाता पञ्चदशं रत्नं जामाता दशमो ग्रहः ॥

---

## टीकाकार-निन्दा ।

( २७२ )

विविधशास्त्रेषु वैचक्षण्यं विना कस्यचिद् ग्रन्थस्य टीकाप्रणयनमुपहासाय भवतीत्याह —

दुर्बोधं यदतीव तद् विजहति स्पष्टार्थमित्युक्तिभिः
स्पष्टार्थेष्वतिविस्तृतिं विदधति व्यर्थैः समासादिकैः ।
अस्थानेऽनुपयोगिभिश्च बहुभिर्जल्पैर्भ्रमं तन्वते
श्रोतॄणामिति वस्तुविप्लवकृतः प्रायेण टीकाकृतः ॥
( भोजराजस्य )

---

## दारिद्र्य-निन्दा ।

( २७३ )

कमलयोश्चरश्चन्द्रः पूर्णचन्द्रस्ततोऽधिकम् ।
तत् तव विपद्दृष्टिस्ते किं मातः कमलानये ॥
( उद्भटसागरस्य )

( २७४ )

पलालोपरि वस्त्रखण्डमेकं पातयित्वा निशि शयानस्य भर्त्तुः समीपे स्तनन्धयं शिशुमादाय शयितुमागता पत्नी भर्त्तारमिदमाह —

वासःखण्डमिदं प्रयच्छ ननु वा स्वाङ्के गृहाणार्भकं
रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलालोच्चयः ।
दम्पत्योरिति जल्पितं निशि यदा शुश्राव चौरस्तदा
लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ॥

( २७५ )

दारिद्र्यमूला दुरवस्था दर्शयति —

वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं
कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्त्तापि नो ।
यत्नात् सञ्चिततैलबिन्दुघटिका भग्नेति पर्य्याकुला
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति ॥

( २७६ )

क्षुत्तृषाशाम्त्रयो दारा मयि जीवति नान्यगाः ।
तासामाशा महासाध्वी मुञ्चन्तं मा न मुञ्चति ॥

( २७७ )

सार्वविरोध दारिद्र्यं निन्दन्नाह —

चौरेभ्यो न भयं न दण्डपतनात् त्रासोऽपि वा भूपतेः
शङ्का नो शयने निशासु गमने दुर्गे च मार्गे स्थितौ ।
दारिद्र्यं सुखमेव केवलमहो दुःखद्वयं दुःसह-
मायान्तोऽतिथयः प्रयान्ति विमुखा निन्दन्ति च ज्ञातयः ॥

( २७८ )

दरिद्रस्य विद्या विफलैव ग्रासाच्छादनार्थं भिक्षाश्रयणादित्याह —

विद्या मे वनिता ततोऽजनि सुतैर्लज्जायशोमानकै-
दैन्यात् साऽनशनाऽनशत् सह सुतैर्भिक्षाऽपरा संग्रहा ।
साऽवाप्या भजते सदैव धनिनस्तस्याश्च जातः सुतः
सोऽर्थः चेतज एव पाति ससुखं मां किं तया विद्यया ॥

( २७९ )

दारिद्र्यान्मरणमपि वरमिति भङ्ग्यन्तरेणाह —

उत्तिष्ठ क्षणमेकमुद्वह सखे दारिद्र्यभारं मम
श्रान्तस्तावदहं चिरं मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तो धनवर्जितेन विदुषा सख्या श्मशाने शवो
दारिद्र्यान्मरणं परं सुखमिति ज्ञात्वैव तूष्णीं स्थितः ॥

( २८० )

धनाशया धनिगृहाङ्गणं प्रविष्टस्य दौवारिकेण गलहस्तं दत्त्वा बहिष्कृतस्य कस्य-

चिदुक्तिरियम् .—

भस्माच्छुरिततनुः कदर्थशयनात्कूली कदन्नाशनात्
तैलाभाववशात् सदा शिरसि मे केशा जटात्वं गताः ।
गौरीकः स च नैव लाङ्गलवहो भार्या गृहे चण्डिका
प्राप्य त्वत्त इहार्धचन्द्रमधुना प्राप्तं पदं शाम्भवम् ॥

( २८१ )

सर्वे क्लेशबहुले कल्पभि रामपद प्राप्तुमभिलषन्ति दारिद्र्यात्तु मामयवसुलभ रामत्व प्रापयदित्याह —

जनस्थाने भ्रान्तं कनकमृगतृष्णान्वितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्त्तुर्वदनपरिपाटीषुरचना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥
( भट्टवाचस्पतेः )

( २८२ )

सुखदु:ख हि भाग्यमूलकमिति उक्तिप्रत्युक्तिभ्यामाह —

कस्त्वं भो: कविरस्मि तत् किमु सखे क्षीणोऽस्यनाहारतो
धिग् देशं गुणिनोऽपि दुर्गतिरियं देशं न मामेव धिक् ।
पाकार्थी क्षुधितो यदैव विदधे पाकाय बुद्धिं तदा
विन्ध्ये नेन्धनमम्बुधौ न सलिलं क्षोण्यां न वा तण्डुलः ॥

( २८३ )

किञ्चित्कार्य्यानुरोधेन चिर प्रोषित पुन प्रत्यागत मायेश्वरविद्यालङ्कारमवलोक्य महाराजकृष्णचन्द्रेण किमवस्था भवतो गृहिणीति पृष्ट स प्रोषिते मलिना कृशे ति शास्त्रनियम धारयन् प्रत्युवाच '—

न भाले सिन्दूरं न च नयनयोरञ्जनरसो
न गात्रे स्नेहादिर्न च खदिररागोऽधरपुटे ।
अवैधव्यं किञ्चित् कथयति मदम्भोरुहदृशो-
र्लठत्यग्रे बाहोर्विगतकलङ्को लोहवलयः ॥
( मायेश्वर विद्यालङ्कारस्य )

( २८४ )

दारिद्र्यात् परो रिपुर्नास्तीत्याह :—

शीलं शातयति श्रुतं शमयति प्रज्ञां निहन्ति क्रमाद्
दैन्यं दीपयति क्षमां क्षपयति व्रीडां निरस्यत्यपि ।
तेजो जर्जरयत्यपास्यति मतिं विस्तारयत्यर्थितां
दारिद्र्यं पुरुषस्य किं न कुरुते वैरं परं भीषणम् ॥
( त्रिविक्रमस्य )

( २८५ )

केनचित् नरपतिना नियम एष प्रचारित यत् तस्य राज्यमध्ये कोटीश्वर विना कश्चिदपि जनो वस्तु न समर्थो भविष्यतीत्याकर्ण्य कश्चिद दरिद्र कवि राजानमिदमुवाच '—

वाप्यां वाप्यालकोटिः कुपिठरजठरे मक्षिकाणाञ्च कोटिः
कोटिर्गेहषट्पदानां मम रहपटले कुन्तले यूककोटिः ।
अङ्गे विस्फोटकोटिः कटितटविलसत्कर्पटे ग्रन्थिकोटिः
एषां कोटीश्वरोऽहं कथय नृप कथं ते पुरोभागहं न ॥

( २८६ )

सर्वेऽपि पुरुषकारा दैवप्रतिकूलत्वे विफलत्वमायान्तीत्याह —

विद्या सत्कविता तथा सुजनता सेवापि च प्रार्थना
पञ्चैताः परिणिन्यिरे जनयितुं वित्तार्जनं यत्नतः ।
व्यापारं सकलं विहाय सततं तास्वेव रक्ता मया
दुर्दैवेन दुरात्मना नरपते पञ्चैव वन्ध्याः स्त्रियः ॥

( २८३ )

स्वार्थी हि पुरुषाणां रुचिभेदेन तान् उत्तममध्यमाधमतां नयतीत्याह :—

ते ते सत्पुरुषाः परार्थघटकाः स्वार्थस्य ये बाधया
मध्यस्थाः परकीयकार्य्यकुशलाः स्वार्थाविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं यैः स्वार्थतो हन्यते
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥

( २८४ )

खला हि विषकुम्भाः पयोमुखा इति रेफसादृश्येन प्रमाणयति —

सम्मुखवर्त्ती पिशुनो
भवति सदा यः पदे लग्नः ।
स पुनः पृष्ठनिविष्टो
रेफ इवायं शिरःस्थायी ॥

( २८५ )

परस्परस्य सङ्गनिर्मं चिरमेलनमपि वियोजयितुं कर्णेजपानामलौकिकी शक्तिरित्याह

दर्वीदीर्घविघट्टनेन शिखिना भूयोऽपि सन्तापनै-
र्विक्षेपः पयसः कदापि हविषः केनापि नोद्भावितः
मन्थानः पुनरेव विस्तृतमुखो भूयो भ्रमन्नन्तरे
पार्थक्यं विदधाति तादृगनयोरैक्यं यथा नो पुनः ॥

( २८६ )

काव्ये भव्यतमेऽपि विज्ञनिवहैरास्वाद्यमाने मुहु-
र्दोषान्वेषणमेव मत्सरजुषां नैसर्गिको दुर्ग्रहः ।
कासारेऽपि विकासिपङ्कजचये खेलन्मराले पुनः
क्रौञ्चश्चञ्चुपुटेन कुञ्चितवपुः शम्बूकमन्विष्यति ॥

( २८७ )

दातुं कृतयत्नस्यापि दातुर्मतिविपर्ययं कुर्वन्तं खलं प्रति कस्यचिद् याचकस्योक्तिरियम् :—

प्रायः स्वभावमलिनो महतां समीपे
तिष्ठन् खलः प्रकुरुतेऽर्थिजनोपघातम् ।
शीतार्दितैः सकललोकसुखावहोऽपि
धूमे स्थिते नहि सुखेन निषेव्यतेऽग्निः ॥

---

## द्विपत्नीक-निन्दा ।

( २८८ )

बिलाद् बहिर्बिलस्यान्तः स्थितमार्जारसर्पयोः ।
आखुर्मध्य इवाभाति द्विभार्यो दुर्बलो नरः ॥
( विकटनितम्बायाः )

---

## धनि-निन्दा ।

( २९९ )

कलौ भाग्यवशादेक एव धनस्वामी अवस्थाभेदेन पञ्चोपास्यदेवतात्मको भवतीत्याह

दूरादर्थिनमाकलय्य भजते सद्यो विरूपाक्षता
सङ्गे किञ्च विरोचनत्वमथ संस्थाने नृसिंहाकृतिम् ।
पाण्डित्योक्तिषु वक्रतुण्डरचनं दाने त्वपर्णात्मता-
मेकः पञ्चसुरात्मकः प्रभुरहो भाग्यैः कलौ लभ्यते ॥

( ३०० )

भारोपरि गुरुभारोद्वहनाय प्रभुणादिष्टो भृत्यः स्वगतं विलपति :—

शीर्षे भवभराक्रान्ते श्रिया शेते सुखं हरिः ।
लक्ष्मीवन्तो न जानन्ति दुःसहां परवेदनाम् ॥
( शीलाभट्टारिकायाः )

( ३०१ )

निद्राति स्नाति भुङ्क्ते चरति कचभरं शोधयत्यन्तरास्ते
दीव्यत्यक्षैर्न चायं गदितुमवसरः सायमायाहि याहि ।
इत्युद्दण्डैः प्रभूणामसकृदधिकृतैर्वारितान् द्वारि दीना-
नस्मान् पश्याब्धिकन्ये सरसिरुहरुचामन्तरङ्गैरपाङ्गैः ॥
( प्रेमचन्द्र तर्कवागीशस्य )

## निर्गुण-निन्दा ।

( ३०२ )

छेदश्चम्पकचूतचन्दनवने रक्षा करीरद्रुमे
हिंसा हंसमयूरकोकिलकुले काकेषु बद्धादरः ।
मातङ्गेन खरक्रयः सुसमता कर्पूरकार्पासयो-
रेषा यत्र विचारणा गुणिगणे देशाय तस्मै नमः ॥

## निर्लज्ज-निन्दा ।

( ३०३ )

कामः को मे पुरस्तादिति वदति मुहुः पेचकी मेचकाभः
संख्ये सिंहेन हेलां प्रथयति नितरां जीर्णबालः शृगालः ।
उड्डीयोड्डीय काकोऽप्युपहसति गरुत्मन्तमप्यन्तराले
लज्जाभीतिच्युतानां वद वदनभृतां वाचि को बाधकः स्यात् ॥

## नीच-निन्दा ।

( ३०४ )

अथागतो नीचमना जनो बहुसम्पद्विसम्पन्नोऽपि स्वीयं नीचत्वं न परित्यजतीत्याह —

स्वभावेन हि यः क्षुद्रो दयादिगुणान्वितोऽपि सः ।
न जहाति निजं भावं संख्यासु लाकृतिर्यथा ॥

## परिजन-निन्दा ।

( २०५ )

मूर्खो बहुसिधं पुत्रो बहुतूलो लघुः सुता ।
बहुवर्षं खरा दारा भ्रातिश्च बहुप्रत्यिकः ॥

( उद्भटसागरस्य )

---

## पुत्र-निन्दा ।

( २०६ )

पुत्रः स्यादिति दुःखितः सति सुते तस्यामये दुःखित-
स्तद्दुःखादिकमार्जने तदनयात् तन्मूर्खताद्दुःखितः ।
जातश्चेत् सगुणोऽथ सम्मृतिभयं मत्वी भृशं दुःखितः
पुत्रव्याजमुपागतो रिपुरयं मा कस्यचिज्जायताम् ॥

( भर्तृहरेः )

---

## भिक्षा-निन्दा ।

( २०७ )

द्वारे द्वारे परेषामविरलमटति द्वारपालैः करालै-
रालोक्यैवाहतो यः खनति गणयति स्वापमानं न किञ्चित् ।
सोढुं शक्नोति नान्यं स्वसदृशमितरागारमप्याश्रयन्तं
श्वाप्यत्यात्मोदरार्थे स कथमिह शुना नो समो भिक्षुको यः ॥

( दामोदरगुप्तस्य )

( ३०८ )

व्रजासन्निपातज्वरयोः साम्यं दर्शयति :—

सप्रस्वेदः पुलकपरुषः संभ्रमो सप्रकम्पः
सान्तर्दाहः प्रशिथिलधृतिः सास्यशोषः सतर्षः ।
संवृत्तो यो गुरुरपि लघुर्हन्त तैस्तैः प्रकारै-
र्योऽव्याशब्दः स्पृशति पदवीं सन्निपातज्वरस्य ॥

## मद्यपान-निन्दा ।

( ३०९ )

यत् पीत्वा गुरवेऽपि कुप्यति विना हेतोस्तथा रोदिति
भ्रान्तिं याति करोति साहसमपि व्याधेर्भवत्यास्पदम् ।
कौपीनञ्च जहाति लोकपुरतोऽप्युन्मत्तवच्चेष्टते
तल्लज्जापरिपन्थि मोहजनकं मद्यं न पेयं नरैः ॥

( शङ्कुकस्य )

## मूर्ख-निन्दा ।

( ३१० )

गोभिः क्रीड़ितवान् कृष्ण इति गोसमबुद्धिभिः ।
क्रीड़त्यद्यापि सा लक्ष्मीरहो देवी पतिव्रता ॥

( विज्जकायाः )

( ३११ )

मूर्खस्य अष्टविधभावान् विवृणोति —

मूर्खत्वं सुलभं भजस्व कुमते मूर्खस्य चाष्टौ गुणा
निश्चिन्तो बहुभोजकोऽतिमुखरा रात्रिन्दिवं स्वप्नभाक्।
कार्याकार्यविचारणाविरहितो मानापमाने समः
प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥

## लोभ-निन्दा।

( ३१२ )

लोभपरतन्त्रा हि जीवनाशमप्यपहाय किं न कुर्वन्तीत्याह —

यद्दुर्गामटवीमटन्ति विकटं क्रामन्ति देशान्तरं
गाहन्ते गहनं समुद्रमथनक्लेशां कृषिं कुर्वते।
सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसञ्चरं
गच्छन्ति प्रधनं धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥

## (ख) प्रशंसा-तरङ्गः।

## उद्भटकविता-प्रशंसा।

( ३१३ )

रसाय तस्मै नम उद्भटस्य
शीतायते हृत् प्रपताऽपि यस्य।
प्रफुल्लभावं सुजनस्य चास्य-
मालिन्यमेवैति सदुर्जनस्य ॥
(उद्भटसागरस्य)

( ३१४ )

खिन्नं खेन समुड्डटेन सरसं स्वीयं मनो जायते
श्रुत्वाऽन्यस्य समुड्डटं खलु मनः स्नातुं पुनर्वाञ्छति ।
अज्ञान् ज्ञानवतोऽपि येन वशगान् कर्त्तुं समर्थः सुधीः
कार्य्यस्तस्य समुड्डटस्य मनुजैरत्यादरात् संग्रहः ॥
( भट्टोड्डटस्य )

( ३१५ )

अस्थाने पतितः स उड्डटरसो वाणीप्रियः कल्पते
न्यक्काराय घृणाचयाय नितरां तापाय पापाय च ।
स्थाने स व्ययितः परं प्रभवति प्रख्यातये भूतये
चेतोनिर्वृतये परोपकृतये श्रेये शिवस्याप्तये ॥
( पण्डितजगद्धरस्य )

( ३१६ )

किं हारैः किमु कङ्कणैः किमसमैः कर्णावतंसैरलं
केयूरैर्मणिकुण्डलैरलमलं साडम्बरैरम्बरैः ।
पुंसामेकमखण्डितं पुनरिदं मन्यामहे मण्डनं
यन्निष्पीडितपार्वणामृतकरस्यन्दोपमा उड्डटाः ॥
( वल्लभदेवस्य )

## उद्यम-प्रशंसा ।

( ३१७ )

भ्रमन् स्वं पूरयेद् वैद्यो भ्रमन् स्वं पूरयेद् द्विजः ।
भ्रमन् स्वं पूरयेत् तर्कुर्भ्रमन् स्वं न पूरयेत् ।।
( कविचन्द्रस्य )

---

## गुणज्ञ-प्रशंसा ।

( ३१८ )

गुणपरिचयेन तदास्वादो यस्य कस्यापि न घटते इत्याह :—

संगृह्णाति गुणी गुणं गुणिगणाद् गृह्णाति तं नागुणी
दूरारण्यनिकेतनोऽपि मधुपः प्राप्यैव तत् पङ्कजम् ।
माध्वीकं परिपिबतोऽस्य नितरामाकण्ठमुत्कण्ठितो
भेकस्तन्निकटस्थितोऽपि नियतं खादत्यहो कर्दमम् ॥

---

## गृहि-प्रशंसा ।

( ३१९ )

पुत्रः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः
स्निग्धं मित्रमवञ्चकः परिजनो निष्क्लेशलेशं मनः ।
आकारो मधुरः स्थिरश्च विभवो विद्यावदातं मुखं
तुष्टे विष्टपकष्टहारिणि हरौ संप्राप्यते गेहिना ॥

---

## छात्र-प्रशंसा ।

( ३२० )

छात्रेषु कः प्रशस्यः को वा निन्द्यतराः :—

यश्छात्रः श्रुतमात्रमर्थमखिलं गृह्णाति स श्लाघ्यतां
यो वेत्ति द्विरदाहतं कृतफलं तत्रापि वक्तुर्वचः ।
यस्तु स्पष्टमनेकशोऽप्यभिहितः कुर्यान्न किञ्चिद्बुधं
धिक् तं तत्पितरौ धिगेव नितरां धिक् तद्गुरुं गर्दभम् ॥

( हरिभट्टस्य )

---

## तेजस्वि-प्रशंसा ।

( ३२१ )

स्वपीकृतमहायशाः समयदोषदुःस्थोऽपि सन्-
ननल्पविषयाश्रयी लघुषु नेहते कर्मसु ।
महीधरसहोदरद्विरदयूथविद्रावणो
बुभुक्षुरपि केशरी न खलु मूषिकं धावति ॥

---

## दया-प्रशंसा ।

( ३२२ )

दया परं धर्ममसुत्र चात्र
दयावतां न स्वपरप्रभेदः ।
दुःखं परेषामवलोकते चेद्
सत्वाऽऽत्मनस्तद् व्यथते दयालुः ॥

( शिवनारायण शिरोमणेः )

## दातृ-प्रशंसा ।

( ३२३ )

दरिद्र खदूरीकरणे देवानां वैमुख्य दर्शयन दानशीलान् महाजनान् स्तौति —

रुद्रोऽद्रिं जलधिं हरिर्दिविपदो दूरं विहाय: स्थिता
भोगीन्द्राः प्रबला अपि प्रथमतः पातालमूले स्थिताः ।
लीना पद्मवने सरोजसदना मन्येऽर्थिसार्थाद् भिया
दीनोद्धारपरायणाः कलियुगे धन्या उदारा जनाः ॥
( शङ्कुकस्य )

( ३२४ )

एकोऽयं पृथिवीपतिः चितितले लचाधिका भिक्षुकाः
किं कस्मै वितरिष्यतीति किमहो एतद् वृथा चिन्त्यते ।
चास्ते किं प्रतियाचकं सुरतरुः प्रत्यम्बुजं किं रविः
किं वाऽस्ति प्रतिचातकं प्रतिलतागुल्मञ्च धाराधरः ॥

---

## दाम्पत्यप्रेम-प्रशंसा ।

( ३२५ )

प्रशंसन्ति च निन्दन्ति निगमा यद् गृहाश्रमम् ।
दाम्पत्यसाम्यवैषम्यभेदादेतद्व्यवस्थितिः ॥
( नीलकण्ठदीक्षितस्य )

## दुःख-प्रशंसा ।

( ३२६ )

द्विष्टत्वेन विबुध्य दुःखमबुधैर्नैतत् कदा काम्यते
न द्विष्टं परमिष्टसाधनमिदं विज्ञेन विज्ञायते ।
वैराग्यं नहि जायते जनिहरं शोकादिजं तद्विना
तस्मादेव गुणत्वमत्र मुनिना गीतं कणादादिना ॥
( महामहोपाध्याय राखालदास न्यायरत्नस्य )

## धन-प्रशंसा ।

( ३२७ )

धनसम्बन्धादेव पुंसां सम्मानभागित्वमित्याह —

लक्ष्मीश इति गोविन्दः श्रीदमित्रमितीश्वरः
हिरण्यगर्भ इत्येव ब्रह्मापि बहुमानितः ॥
( नीलकण्ठदीक्षितस्य )

## धनि-प्रशंसा ।

( ३२८ )

धनगुणयोर्धनमेव गरीय इत्याह —

धिगस्त्वेषां विद्यां धिगपि कविता धिक् सुजनतां
वयो रूपं धिग् धिग् धिगपि च कुलं दुर्गतिमतः
असौ जीयादेकः सकलगुणहीनोऽपि धनवान्
बहिर्यस्य द्वारे तृणलवसमाः सन्ति गुणिनः ।

## धर्म-प्रशंसा ।

( ३२९ )

मानुष्ये सति दुर्लभा पुरुषता पुंस्त्वे पुनर्विप्रता
विप्रत्वे बहुविद्यता नययुता विद्यावतोऽर्थज्ञता ।
अर्थज्ञस्य विचित्रवाक्यपटुता तत्रापि लोकज्ञता
लोकज्ञस्य समस्तशास्त्रविदुषो धर्मे मतिर्दुर्लभा ॥
( क्षेमेन्द्रस्य )

( ३३० )

धर्मः शर्म परत्र चेह च नृणां धर्मोऽन्धकारे रविः
सर्वापत्प्रशमक्षमः सुमनसां धर्मो निधिर्मूल्यवान् ।
धर्मो बन्धुरबान्धवे पृथुपथे धर्मः सुहृन्निश्चलः
संसारोरुमरुस्थले सुरतरुर्नास्त्येव धर्मात् परः ॥
( क्षेमेन्द्रस्य )

---

## पण्डित-प्रशंसा ।

( ३३१ )

पण्डितस्य षट् गुणान् विवृणोति :—

दम्भं नोद्वहते न निन्दति परान् नो भाषते निष्ठुरं
प्रोक्तं केनचिदप्रियञ्च सहते क्रोधञ्च नालम्बते ।
श्रुत्वा शास्त्रमपि प्रभूतमनिशं सन्तिष्ठते मूकवद्
दोषांश्छादयते गुणान् वितनुते चाष्टौ गुणाः पण्डिते ॥

( ३३२ )

उपादाता यावन्न भवति गुणानां गुणवता-
समस्तकल्याणास्त्रैलोक्यभुवनसन्ध्यार्घा अपि गुणाः ।
अपि प्राग् दैत्यारेर्हृदयवसतिः कौस्तुभमणिः
स किं नासीदब्धौ स्तुतिरपि किमस्य क्वचिदभूत् ॥

## परोपकार-प्रशंसा ।

( ३३३ )

सद्भिः स्वोपार्जितधनैः परोपकारः कर्तव्य इति दृष्टान्तेन द्रढयति ।—

रत्नाकरः किं कुरुते स्वरत्नै-
र्विन्ध्याचलः किं करिभिः करोति ।
श्रीखण्डखण्डैर्मलयाचलः किं
परोपकाराय सतां विभूतिः ॥

## प्रेम-प्रशंसा ।

( ३३४ )

इन्दुः क्व क्व च सागरः क्व च रविः पद्माकरः क्व स्थितः
क्वाभ्रं वा क्व मयूरपङ्क्तिरमला क्वाऽलिः क्व वा मालती ।
मन्दाक्रान्तमराजहंसनिचयः क्वाऽसौ क्व वा मानसं
यो यस्याऽभिमतः स तस्य निकटे दूरेऽपि वा वल्लभः ॥

( ३३५ )

दोषः कश्चिद् यदि निजजने सम्भवेद् दैवयोगाद्
नासौ ग्राह्यो भवति महतां रीतिरेषास्ति लोके ।
भृङ्गो दैवाद् यदि कुमुदिनीं गच्छति भ्रान्तचेताः
पद्मिन्या स प्रियमधुकरस्त्यज्यते किं कदाचित् ॥

## ब्रह्मतेजः-प्रशंसा ।

( ३३६ )

अल्पीयसैव पयसा यः कुम्भः परिपूर्यते ।
पपौ तदुद्भवः सिन्धुं गुरुत्वाद् ब्रह्मतेजसः ॥

## भक्ति-प्रशंसा ।

( ३३७ )

नो मुक्त्यै स्पृहयामि नाथ विभवैः कार्यं न सांसारिकैः
किन्त्वायोज्य करौ पुनः पुनरिदं त्वामीशमभ्यर्थये ।
स्वप्ने जागरणे स्थितौ विचलने दुःखे सुखे मन्दिरे
कान्तारे निशि वासरे च सततं भक्तिर्ममास्तु त्वयि ।
( वाग्भटस्य )

## मनस्वि-प्रशंसा ।

( २३८ )

धनलोभेन परेषां सेवाद्यपेक्षया याचिना तत्कारणाच्च मलमपि वरमित्याह :

पङ्गो वन्द्यस्त्वमसि न गृहं यासि योऽर्थी परेषां
धन्योऽन्ध त्वं धनमदवतां नेक्षसे यन्मुखानि ।
श्लाघ्यो मूक त्वमपि कृपणं स्तौषि नार्थाशया यः
स्तोतव्यस्त्वं बधिर न गिरं यः खलानां शृणोषि ॥

---

## महत्त्व-प्रशंसा ।

( २३९ )

स्वभावत उन्नतचेता गुणी बहुभिर्वैयुक्तोऽपि निजगौरवं न कदाचित् परिहरतीत्याह —

महतां प्रकृतिः सैव वर्द्धितानां परैरपि ।
न जहाति निजं भावं संख्यासु लाकृतिर्यथा ॥
( शिवनारायण शिरोमणिः )

---

## मौन-प्रशंसा ।

( २४० )

वाचालतां निन्दन् मौनं स्तौति :—

मौखर्यं लघुताहेतुर्मौनमुन्नतिकारणम् ।
मुखरं नूपुरं पादे कण्ठे हारो विराजते ॥

( २४१ )

अमुष्मिन्नुद्याने विहगखल एष प्रतिपलं
विलोलः काकोलः क्वणति खलु यावत् कटुतर
सखे तावत् कीर दृढय हृदि वाचञ्च सकलां
न मौनेन न्यूनो भवति गुणभाजां गुणगणः ॥

---

## विद्या-प्रशंसा ।

( २४२ )

विद्या नाम नरस्य कीर्त्तिरतुला भाग्यक्षये चाश्रयो
धेनुः कामदुघा रतिश्च विरहे नेत्रं तृतीयं च सा ।
सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं
तस्मादन्यमुपेक्ष्य सर्वसुखदं विद्याधिकारं कुरु ॥

---

## स्वरूपनिरूपण-प्रशंसा ।

( २४३ )

एवं बहवो जना दृश्यन्ते ये तावत् स्थानविशेषवासित्वात् तदनुसारेण निन्द्यन्ते तत्र युक्तमित्याह —

पुंसः स्वरूपपरिदर्शनमेव कार्य्यं
तज्जन्मभूमिगुणदोषकथा वृथैव ।
रत्नाकरोत्थमभिनन्दति को विषं वा
को वा न पद्ममभिनन्दति पङ्कजातम् ॥

---

## सहाय-प्रशंसा ।

( ३४४ )

सद्वंशजातं गुणकोटिनम्रं
धनुः कथं क्षत्रियवामहस्ते ।
शरः परप्राणहरोऽप्यसव्ये
सत्पक्षयोगादधमो गरीयान् ॥

( ३४५ )

दुर्बलोऽपि सहायवत्तया सबलद् साध्य साधयतीत्याह —

अत्युच्चभूधरवरोपरि तुङ्गवृक्षात्
काकोऽपि पक्कफलमालभते सपक्षः ।
सिंहो बली द्विरदवर्ग्यबलाधिकोऽपि
सीदत्यहो तरुतले स हि पक्षहीनः ॥

---

## सुकवि-प्रशंसा ।

( ३४६ )

धीरं निक्षिपते पदं हि परितः शब्दं समुद्वीक्षते
नानार्थाहरणञ्च वाञ्छति मुदाऽलङ्कारमाकर्षति ।
आदत्ते विमलं सुवर्णनिचयं धत्ते रसान्तर्गतं
दोषान्वेषणतत्परो विजयते सञ्चोरवत् सत्कविः ॥

( ३४७ )

अर्थान् केचिदुपासते कृपणवत् केचित्त्वलङ्कुर्वते
नष्टावत् खलु धातुवादिन इवोद्ध्मन्ति केचिद् रसान् ।
अर्थालङ्कृतिसद्रसद्रवमुचां वाचां प्रशस्तिस्पृशां
कर्त्तारः कवयो भवन्ति कतिचित् पुण्यैरगण्यैरिह ॥
( राघवचैतन्यस्य )

( ३४८ )

नैव व्याकरणज्ञमेति पितरं न भ्रातरं तार्किकं
दूरात् सङ्कुचितेव गच्छति पुनश्चण्डालवच्छान्दसात् ।
मीमांसानिपुणं नपुंसकमिति ज्ञात्वा निरस्तादरा
काव्यालङ्करणज्ञमेत्य कविताकान्ता वृणीते स्वयम् ॥
( क्षेमेन्द्रस्य )

---

## सुजन-प्रशंसा ।

( ३४८ )

दृश्यन्ते भुवि भूरिनिम्बतरवः कुत्रापि ते चन्दनाः
पाषाणैः परिपूरिता वसुमती वज्रो मणिर्दुर्लभः ।
श्रूयन्ते करटारवाश्च नियतं चैत्रे कुहूकूजितं
तन्मन्ये खलसङ्कुलं जगदिदं द्वित्राः क्षितौ सज्जनाः ॥

( २५० )

घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुदण्डम् ।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
प्राणान्तेऽपि प्रकृतिविकृतिर्जायते नोत्तमानाम् ॥

---

## सुपुत्र-प्रशंसा ।

( २५१ )

कुम्भः परिमितमम्भः
पिबत्यसौ कुम्भसम्भवोऽम्भोधिम् ।
अतिशेते हि सुपुत्रः
कश्चिज्जनकं निजेन चरितेन ॥
( भट्टभल्लटस्य )

( २५२ )

पात्रं न तापयति नैव मलं प्रसूते
स्नेहं न संहरति नैव गुणान् क्षिणोति ।
द्रव्यावसानसमये चलतां न धत्ते
सत्पुत्र एव कुलसद्मनि कोऽपि दीपः ॥

( ३५३ )

अस्तंगते भास्वति नान्धकारान्
शनैश्चरो हन्ति विधौ बुधश्च ।
पितुर्गुणैर्न प्रतिभाति पुत्रो
गुणान्वितो हि स्वगुणेन भाति ॥

---

## सुवंश-प्रशंसा ।

( ३५४ )

गुणप्रयुक्ताः परमर्मभेदिनः
शरा इवावंशभवा भवन्ति हि ।
तथाविधा ये च विशुद्धवंशजा
व्रजन्ति चापा इव तेऽतिनम्रताम् ॥

---

## सुसंसर्ग-प्रशंसा ।

( ३५५ )

मलयाद्रेः समीपस्थो विटपी चन्दनायते ।
कृतवासः समं सद्भिर्दुर्जनः सज्जनायते ॥
( रत्नाकरस्य

( ३५६ )

दूरीकरोति कुमतिं विमलीकरोति
चेतश्चिरन्तनमघं चुलुकीकरोति ।
भूतेषु किञ्च करुणां बहुलीकरोति
सङ्गः सतां किमु न मङ्गलमातनोति ॥
( घर्पटस्य )

---

## स्थानमहिम-प्रशंसा ।

( ३५७ )

अत्रस्य चन्द्राद् गुणाधिक्ये सत्यपि स चन्द्रवत् किं नाद्रियते इति शङ्का निरस्यति :—

उभौ पक्षौ शुक्लौ भुवि वियति चाव्याहतगतिः
सदा मौनं भुङ्क्ते वसति सकलस्थाणुशिरसि ।
बके चान्द्रस्तुल्यो गुणसमुदयः कश्चिदधिको
गुणाः स्थाने मान्या न च पुनरमी स्थानरहिताः ॥
( वररुचेः )

---

## रस-तरङ्गः ।

### ( १ ) शृङ्गार-रसः ।

( ३५८ )

वक्षःस्थलीवदनवामशरीरभागैः
पुष्यन्ति यस्य विभुता पुरुषास्त्रयोऽपि ।
सोऽयं जगत्त्रितयजित्वरचापधारी
मारः परान् प्रहरतीति न विस्मयाय ॥

---

## ( २ ) वीर-रसः ।

( ३५८ )

पीतोऽब्धे कलसोद्भवेन मुनिना ध्वस्तोऽसि देवासुरै-
राबद्धोऽसि च राघवेण मृदुना शाखामृगैर्लङ्घितः ।
धिक् त्वां नाम च तेऽम्बुधिः सलिलधिः पानीयधिस्तोयधिः
पाथोधिर्जलधिः पयोधिरुदधिर्वारानिधिर्वारिधिः ॥

( ३६० )

लक्ष्मणो लघुसन्धानो दूरपाती च राघवः ।
कर्णो दृढप्रहारी च पार्थस्तैते त्रयो गुणाः ॥
( क्षेमेन्द्रस्य )

---

## ( ३ ) करुण-रसः ।

( ३६१ )

व्याधेन जालनिबद्धा काचिन्मृगी सकरुणं ब्रवीति —

आदाय मांसमखिलं स्तनवर्जमङ्गात्
मा मुञ्च वागुरिक यामि कुरु प्रसादम् ।
सीदन्ति शष्पकवलग्रहणानभिज्ञा
मन्मार्गवीक्षणपराः शिशवो मदीयाः ॥
( मुक्तापीडस्य )

( २६२ )

महापण्डितस्य बाणभट्टस्य मृत्युसमये खेदोक्तिरियम् :—

ध्वस्तः काव्योरुमेरुः कविविपणिमहारत्नराशिर्विशीर्णः
　　शुष्कः शब्दौघसिन्धुः प्रलयमुपगतो वाक्यमाणिक्यकोषः ।
दिव्योक्तीनां निधानं निधनमुपगतं हा हता दिव्यवाणी
　　वाणे गीर्वाणवाणीप्रणयिनि विधिना प्रापिते दीर्घनिद्राम् ॥

( बाणभट्टस्य )

---

## ( ४ ) अद्भुत-रसः ।

( २६३ )

मूकारब्धं कमपि बधिरा श्लोकमाकर्णयन्ति
　　यद्वालुस्तं विलिखति कुणिः श्लाघया वीक्षतेऽन्धः ।
अभ्यारोहत्यहह सहसा पङ्गुरप्यद्रिशृङ्गं
　　सान्द्रालस्याः शिशुभरणतो मन्दमायान्ति वन्ध्याः ॥

---

## ( ५ ) हास्य-रसः ।

( २६४ )

चूर्णखदिरयुतवीटी-
　　जनिताधररागभङ्गभयात् ।
पितरि प्रेते गणिका
　　रोदिति हा तातताततेति ॥

( क्षेमेन्द्रस्य )

---

## (६) भयानक-रसः ।

( ३६५ )

दीप्तक्षुद्वेगयोगाद् वदनलहलहल्लम्बजिह्वाग्रलीढ-
ब्रह्माण्डक्षौद्रबिन्दुप्रबलतरभवज्जाठराग्निस्फुलिङ्गाम् ।
कालीं कङ्कालशेषामतुलगलचलन्मुण्डमालाकरालां
गुञ्जासंवादिनेत्रामजिननिवसनां नौमि पाशासिहस्ताम् ॥
( शार्ङ्गधरस्य )

## (७) वीभत्स-रसः ।

( ३६६ )

उत्कृत्य ज्वलितां शवात् कथमपि प्रेताशनः पेशितीं
पेशीमग्निमयीं निगीर्य सहसा दन्दह्यमानोदरः ।
धावत्युत्प्लवते मुहुर्निपतति प्रोत्तिष्ठति प्रेक्षते
विष्वक् क्रोशति संपिनष्टि जठरं मुह्यन् चलन्मस्तकः ॥

## (८) रौद्र-रसः ।

( ३६७ )

रे धृष्टा धार्तराष्ट्राः प्रबलभुजमहत्ताण्डवाः पाण्डवा रे
रे वार्ष्णेयाः सकर्णाः शृणुत मम वचो यद् ब्रवीम्यूर्ध्वबाहुः ।
एतस्योत्खातबाहोर्द्रुपदनृपसुतातापिनः पापिनोऽहं
पाता क्ष्वक्षोणितानां प्रभवति यदि वः कोऽपि वा तं स पातु ॥

## (६) शान्त-रसः ।

### अनित्यता ।

( ३६८ )

सेवध्वं विबुधास्तमन्धकरिपुं मा क्लिश्यतान्यश्रुते
यस्मादत्र परत्र च त्रिजगति त्राता स एकः शिवः ।
आयाते नियतेर्वशात् सुविषमे कालात् करालाद् भये
कुत्र व्याकरणं क्व तर्ककलहः काव्यश्रमः क्वापि वा ॥
( राजानकलोलकस्य )

---

### अनुतापः ।

( ३६९ )

कविर्वार्द्धकं निन्दति —
गात्रं संकुचितं गतिर्विगलिता दन्ताः समुन्मूलिता
दृष्टिर्नश्यति रूपमेव चलितं वक्त्रञ्च लालाकुलम् ।
आलापं न करोति बान्धवजनः पत्नी न शुश्रूषते
हा कष्टं स्थविरः पिताऽपि बहुभिः पुत्रैरवज्ञायते ॥

---

### कर्मफलम् ।

( ३७० )

लक्ष्मीनाथं वहति गरुड़स्तस्य भोज्यो भुजङ्ग
उक्षा वोढ़ा धनपतिसखं सोऽपि घासं जघास ।
हंसो भुङ्क्ते बिसकिशलयं ब्रह्मणो वाहकोऽपि
सेवाभिर्न घयति महतां कर्मणो दुर्विपाकः ॥

( ३७१ )

लब्धं जन्म सह श्रिया स्वयमपि त्रैलोक्यशोभाकरः
स्थित्यर्थं शितिकण्ठमभ्युपगतस्तेनापि शीर्षे धृतः ।
वृद्धिं शीतकरस्तथापि न गतः क्षीणः परं प्रत्युत
प्रायः प्राक्तनमेव कर्म बलवत् कस्योपकुर्वीत कः ॥

( पण्डितश्रीबकस्य )

---

## काल-चरितम् ।

( ३७२ )

पृथ्वीतलेऽस्मिन् यावन्तो जीवा सन्ति सर्वथा सर्वदैव आहारान्वेषणतत्परा न कदाचिद् मृत्युचिन्तां कुर्वन्तीत्याह —

भेको धावति तञ्च धावति फणी सर्पं शिखी धावति
व्याधो धावति केकिनं विधिवशाद् व्याघ्रोऽपि तं धावति ।
स्वस्वाहारविहारसाधनविधौ सर्वे जना व्याकुलाः
कालस्तिष्ठति पृष्ठतः कचधरः केनापि नो दृश्यते ॥

---

## दैवबलम् ।

( ३७३ )

( क )

दाता वलिः प्रार्थयिता रमेशो
दानं मही वाजिमखस्य काल ।
दातु. फलं बन्धनमेव जातं
नमोऽस्तु दैवाय यथेष्टकर्त्रे ॥

( क्षेमेन्द्रस्य )

( ख )

यो यं जनापकरणाय सृजत्युपायं
तेनैव तस्य नियमेन भवेद् विनाशः ।
धूमं प्रसौति नयनान्ध्यकरं यमग्नि-
र्भूत्वाऽम्बुदः स शमयेत् सलिलैस्तमेव ॥
( कह्लणस्य )

---

## प्रार्थना ।

( २७४ )

मुक्तिकामिन कस्यचिदुक्तिरियम् —
सुव्यक्ता वेदभागैश्वरसदुरितजध्वंसरूपा हि मुक्ति-
स्तत्तातस्तत्त्वबोधो ननु जनकतया तस्य दौत्यं न युक्तम् ।
भक्ते त्वं तत्त्वबोधस्य हि निजजननी धर्मतः सापि नम्रो
गद्यैः पद्यैर्वचोभिः परिहसनविधौ त्वं हि वक्तुं समर्था ॥
( चर्पटस्य )

( २७५ )

गङ्गातीरवासी स्थविर कोऽपि धनवान् कदाचित् केनचिदात्मीयेन 'कथं भवान् शरीररक्षार्थं ग्रासाच्छादनादिषु न यतते' इत्येवं पृष्टस्तं प्रत्युवाच —
स्वःसिन्धुतीरेऽघविघातधीरे
वहत्समीरे करलभ्यनीरे ।
वसन् कुटीरे परिधाय चीरे
करोम्यधीरे न रुचिं शरीरे ॥

( ३७६ )

वाराणस्यां विश्वेश्वरसमीपे प्रार्थना —

हर हर हर रतिं मे देहगेहेषु गङ्गा-
धर धर धरभावं चेतसः स्वे पदाब्जे।
भव भव भवसिन्धौ कर्णधारोऽत्र मृत्युं-
जय जय 'जय-शम्भो'-वाक् सदा स्यान्मदास्ये॥
( श्यामाचरण कविरत्नस्य )

---

## विषय-तृष्णा ।

( ३७७ )

( क )

समाप्य विषयान् सर्वान् यः कृष्णे भक्तिमिच्छति ।
सागरे शान्तकल्लोले स्नातुमिच्छुः स दुर्मतिः ॥

( ख )

यस्या बीजमहङ्कृतिर्गुरुतरं मूलं ममेति ग्रहो
भोगस्य स्मृतिरङ्कुरः सुतसुताज्ञात्यादयः पल्लवाः ।
स्कन्धो दारपरिग्रहः परिभवः पुष्पं फलं दुर्गतिः
सा मे ब्रह्मविभावनापरशुना तृष्णालता लूयताम् ॥

---

## वैराग्यम् ।

( ३७८ )

भोगे रोगभयं सुखे क्षयभयं वित्तेऽग्निभूभृद्भयं
दास्ये स्वामिभयं गुणे खलभयं वंशे कुयोषिद्भयम् ।
माने म्लानिभयं जये रिपुभयं काये कृतान्ताद्भयं
सर्वं नाम भवे भवेद्भयमयं वैराग्यमेवाभयम् ॥
( क्षेमेन्द्रस्य )

---

# विविध-तरङ्गः ।

## प्रथम-विन्दुः ।

## प्राचीन-शिलालिपिः ।

## (१) पुरीधामस्थ-जगन्नाथमन्दिरम् ।

( ३७९ )

( क )

पुरीधामस्थजगन्नाथदेवस्य वर्त्तमानमन्दिरस्य निर्म्मापकान्नमाह :—

शकाब्दे रन्ध्रशुभ्रांशुरूपनक्षत्रनायके ।
प्रासादः कारितोऽनङ्गभीमदेवेन धीमता ॥

( ख )

वासुदेवरथकृते गङ्गावंशानुचरिते ग्रन्थे नायिका प्रति अनङ्गसुन्दरनायकेन कथितोऽयं श्लोकः पूर्वोक्तस्य श्लोकस्यैव समर्थकः —

अङ्गक्षौणिशशाङ्केन्दुसम्मिते शकवत्सरे ।
अनङ्गभीमदेवेन प्रासादः श्रीपतेः कृतः ॥

---

## (२) काशीधामस्थ-भवानीश्वरमन्दिरम् ।

( ३८० )

वाराणसीस्थितस्य भवानीश्वरमन्दिरस्य निर्माणं प्रातःस्मरणीयया नाटोरराज्ञा भवान्या कारितमित्याह —

( क-ख )

बाणव्याहृतिरागेन्दुसम्मिते शकवत्सरे ।
निवासनगरे श्रीमद्विश्वनाथस्य सन्निधौ ॥
धरामरेन्द्रवारेन्द्रगौडभूमीन्द्रभाविनी ।
निर्ममे श्रीभवानी श्रीभवानीश्वरमन्दिरम् ॥

---

## (३) वड़नगरस्थ-गोपालमन्दिरम् ।

( ३८१ )

मुर्शिदाबाद जेलान्तर्गत 'वड़नगर' स्थितस्य गोपालमन्दिरस्य निर्माणं प्रातःस्मरणीयाया 'नाटोर' राज्ञ्याः कन्यया तारया कारितमित्याह —

खशून्यमिव शाके श्रीभवानीतनुसम्भवा ।
निर्ममे श्रीमती तारा श्रीमद्गोपालमन्दिरम् ॥

---

## (४) गङ्गावासग्रामस्थ-हरिहरमन्दिरम् ।

( ३८२ )

हरिहरभेदज्ञानोपहतचेतसां नराणां भ्रान्ति निराकर्तुं नवद्वीपाधिपतिना मह-राजेन्द्रबाहादुर कृष्णचन्द्रेण गङ्गावासे हरिहरमूर्त्तिस्थापनं कृतमित्याह —

गङ्गावासे विधिश्रुत्यनुगतसुकृतक्षौणिपाले शकेऽस्मिन्
श्रीयुक्तो वाजपेयी भुवि विदितमहाराजराजेन्द्रदेवः ।
भेत्तुं भ्रान्तिं सुरारित्रिपुरहरभिदामज्जतां पामराणा-
मद्वैतब्रह्मरूपं हरिहरसुमयाऽस्थापयल्लीलया च ॥

---

## द्वितीय-विन्दुः ।

## (१) अपह्नुति-कविता ।

( ३८३ )

या पाणिग्रहलालिता सुसरला तन्वी सुवंशोद्भवा
गौरी स्पर्शसुखावहा गुणवती नित्यं मनोहारिणी ।
सा केनापि हृता तया विरहितो गन्तुं न शक्तोऽस्म्यहं
हे भिक्षो तव कामिनी नहि नहि प्राणप्रिया यष्टिका ॥
( निशानारायणस्य )

## (२) कूट-कविता ।

( ३८४ )

( क )

अव्याद् वः करणोरणो रणरणो राणोरणो रावणो
धृत्वा येन रमा रमा रम रमा रामा रमा सा रमा ।
स श्रीमानदयोदयो दयदयो दायो दयोर्वेदयो
विष्णुर्जिष्णुरभीरभी राभी रभीसीरभीः ॥

( पदच्छेदे श्लोकस्यास्य आकृतिरियम् )

( ख )

९ ८ १० ११ १२ १३ ४
अव्याद् वः करणोरणः रणरणः राणः अरणः रावणः
३ १ १७ १८ १९ २० १६ २१
धृत्वा येन रं आर मारं अरमा रामा रमासारमा ।
६ २२ २३ ५ १४ २ २४
स श्रीमानदयोदयः दयदयः दायः अत् अयः वेदयः
७ २५ २६ २७ १५
विष्णुः जिष्णुः अभीरभीरभरभीराभीः अभीसीः अभीः ।

---

## (३) गणित-कविता ।

( ३८५ )

कश्चिद् गणितशास्त्रसागरपारदर्शी महापुरुष श्रीकैलाशनेम पाठका यदीक्षं गणयित्वापि यथा « विंशत्यधिकशतवर्षे (१२० वत्सरव्यापि) परमायुर्नभक्ते तथा सूक्ष्मपमिदं दर्शयति ।—

इष्टं कार्त्तिकदर्शनैश्च गुणितं रुद्रेण युक्तं तथा
ब्रह्मास्यप्रहृतं जलाधिपतिना यच्छेषितं तत् पुनः ।
वेदाङ्गैश्च हृतं तदब्दनिचयं विश्वेशभक्तिव्रता-
स्तिष्ठेयुर्भुवि पाठका इति सदा विप्राशुतोषप्रार्थना ॥
(स्यार् श्रीयुताशुतोषमुखोपाध्यायसरस्वत्याः )

( ३८६ )

कश्चिदनेन श्लोकेन भिक्टोरिया महाराज्ञ्या मृत्युखृष्टीयाब्द कौशलेनाविष्कृतेति '—

इष्टं खाभ्रखरांयुतं खखयमव्यस्तं खखेशान्वितं
खाकाशाशुगभाजितं द्विगुणितं यच्छेषितं दृग्हृतम् ।
खाकाशाब्धिसमन्वितं शशियुतं यत् तत्र खृष्टीयके
वर्षेऽस्मान् समपास्य नाकमगमद् भिक्टोरिया भूतलात् ॥
( हरकुमारशास्त्रिणः )

( ३८७ )

श्लोकेऽत्र पूर्वार्द्धे परार्द्धे च पृथग्रीत्या १२० सख्याया आविष्कारार्थे कौशलयं वर्णते '— ,

इष्टं वाणगुणं सुखेन सहितं खाङ्काहतं यत् फलं
तत् तष्टं शरभूधरैश्च गुणितं पक्षेण संवत्सरम् ।
वैष्टं नागहृतं युतं शशभृता निघ्नं शरघ्नैः शिवै-
स्तष्टं व्योमयुगेगजैन गुणितं जीवन्तु शिष्टा जनाः ॥
( उद्भटसागरस्य )

---

## (४) चित्र-कविता ।

( ३८८ )

श्लोकोऽयमनुलोमविलोमपाठे यथा एकविध एव भवति तथा कौशलं दर्शयति :—

वेदापन्ने स शक्ते रचितनिजरुगुच्छेदयत्नेऽरमेरे
देवासक्तेऽसुदत्ते वलदमनयदस्तोददुर्गासवासे ।
सेवासर्गादुदस्तो दयनमदलवत्तोदसुक्ते सवादे
रेमे रत्नेऽयदच्छे गुरुजनितचिरक्षेपरत्नेऽपदावे ॥

( रुद्रटस्य )

---

## (५) प्रहेलिका-कविता

( ३८८१ )

( क )

कः कर्णारिपिता किमिच्छति जनः किं स्वीकृतं विष्णुना
को जानाति परेङ्गितं विषमगुः कुत्रास्ति का कामिनाम् ।
सीता कस्य वधूः प्रियः किमु हरेर्वल्लूरः कफे को घृणा
तत्प्रत्युत्तरमध्यमाक्षरमहामन्त्रो मुखे राजताम् ॥

( अर्भकस्य )

( उत्तरं—"सरस्वति नमस्तुभ्यम्" )

( ख )

सर्वस्वापहरो न तस्करवरो रक्षो न रक्ताशनः
सर्पो नैव बिलेशयोऽखिलनिशाचारी न भूतोऽपि च ।
अन्तर्दानपटुर्न सिद्धपुरुषो नाप्याशुगो मारुत-
स्तीक्ष्णास्यो न तु सायकस्तमिह ये जानन्ति ते पण्डिताः ॥

( अर्भकस्य )

( उत्तरं—"मत्कुणः" खारपोका इति भाषा )

---

## (६) समस्यापूरण-कविता ।

( ३१० )

( क )

समस्या—"अष्टम्याः परतस्तिथिर्न नवमी सा पौर्णमासी किल ।"

सायं भूमिमहोत्सवे बलिघटारक्तोत्कटाखादनात्
सौहित्येन धराधराङ्गभुवि सोद्गारं चिपन्त्यां शिरः ।
चूडाचन्द्रनभःस्थलेन्दुमिलने नीरन्ध्रतासंघटाद्
"अष्टम्याः परतस्तिथिर्न नवमी सा पौर्णमासी किल" ॥

( कालिदासस्य )

( ख )

समस्या— कुर्वन्ति कुरुते करोति कुरुतः कुर्वन्त्यलं कुर्वते ।"

द्वारे यस्य सदा समीरवरुणौ संमार्जने पावकः
पाकं श्रीरगुरातपत्ररचनां दस्रौ मरीहारताम् ।
देवा दास्यविधिष्व हास्यसपरे धन्यः स लङ्केश्वरः
"कुर्वन्ति कुरुते करोति कुरुतः कुर्वन्त्यलं कुर्वते ॥"

( ग )

समस्या—"पतिवक्त्रं न पश्यति ।"

चतुर्थीभाद्रमासस्य चन्द्रचूड़स्य कामिनी ।
दिनद्वयं वर्षमध्ये "पतिवक्त्रं न पश्यति" ॥

( घ )

समस्या—"ब्राह्मणस्य महत् पापं सन्ध्यावन्दनकर्मभिः ।"

परोपकारसद्धर्मरोधकान्यापकारजम् ।
"ब्राह्मणस्य महत् पापं सन्ध्यावन्दनकर्मभिः ॥"

( उद्भटसागरस्य )

( ङ )

समस्या—"चन्द्रोदयं वाञ्छति चक्रवाकी ।"

शत्रौ दुरन्ते परिभूयमाणे
न कस्य हर्षः समुदेति चित्ते ।
भूत्वा तवाच्छादितमाशुतोष
"चन्द्रोदयं वाञ्छति चक्रवाकी" ॥

( उद्भटसागरस्य )

( च )

समस्या—"मापपेपच्छलेन ।"

काचित् कान्ता विरहविधुरा प्रोषितस्य प्रियस्य
प्रावृट्काले प्रबलजलदैः पीड्यमाना पिनष्टि ।
रुद्रं रामं हनुमदरुणौ वासुकिं कुम्भजञ्च
चिन्ता मध्ये दृषदुपलयो "र्मापपेपच्छलेन" ॥

( उद्भटसागरस्य )

## तृतीय-बिन्दुः ।

## कलिकाता-'संस्कृत-कलेज'-निराकृति-प्रस्तावः ।

( ३८१ )

( क )

पञ्चत्रिंशदधिकाष्टादशशतमिते ( १८३५ ) खृष्टाब्दे यदा मस्तिष्क कुल तिलको 'लर्ड मेकले साहेब' कलिकातास्थं 'संस्कृत कलेज' विलापयितुमिच्छन् तात्कालिकं गभर्णर-जेनारलं लर्ड्-उइलियम् वैण्टिङ्-साहेबमनुरुरोध तदा तत्रत्य सर्व्वश्रेष्ठोऽध्यापको महामहोपाध्याय सहृदय पण्डितो जयगोपालतर्कालङ्कारो महाशयो नितरां मर्म्मपीड़ित संस्कृतकलेजस्य सम्पादकचरस्य संस्कृतभाषाहृदयधनस्य महामनस-सुपण्डितस्य होरेस्-हेमान् उइल्सन् साहेबस्य समीपे वक्ष्यमाण श्लोकं प्रेषितवान् —

यस्मिन् संस्कृतपाठसद्मसरसि त्वत्स्थापिता ये सुधी-
हंसाः कालवशेन पक्षरहिता दूरं गते ते त्वयि ।
तत्तीरे निवसन्ति संहितशरा व्याधास्तदुच्छित्तये
तेभ्यस्तं यदि पासि पालक तदा कीर्त्तिश्चिरं स्थास्यति ॥
( जयगोपाल तर्कालङ्कारस्य )

( ख )

( १ )

पूर्व्वोक्तेन महात्मना उइल्सन्-साहेबेन मध्यापक-कुल-तिलकस्य जयगोपाल तर्कालङ्कारस्य पूर्व्वोक्तं श्लोकं पठित्वा दुःखातिशयमनुभवता संस्कृतभाषाया उत्कर्षसूचकं दुःखज्ञापकञ्च वक्ष्यमाणं श्लोकचतुष्टयं तत्सकाशे प्रेषितम् :—

विधाता विश्वनिर्म्माता हंसास्तत्प्रियवाहनम् ।
अतः प्रियतरत्वेन रक्षिष्यति स एव तान् ॥

( २ )

अमृतं मधुरं सम्यक् संस्कृतं हि ततोधिकम् ।
देवभोग्यमिदं यस्माद् देवभाषेति कथ्यते ॥

( ३ )

न जाने विद्यते किं तन्माधुर्य्यमत्र संस्कृते ।
सर्व्वदैव समुन्मत्ता येन वैदेशिका वयम् ॥

( ४ )

यावद् भारतवर्षं स्याद् यावद् विन्ध्यहिमाचलौ ।
यावद् गङ्गा च गोदा च तावदेव हि संस्कृतम् ॥

( होरेस्-हेम्यान्-उइल्सन्-साहेबस्य )

( ग )

तदा संस्कृतकलेजस्य अध्यापकानामन्यतम आलङ्कारिकचक्रवर्त्तिमहोपाध्याय-पण्डित प्रेमचन्द्रतर्कवागीशो महाशयो नितरां दुःखमनुभवन् वक्ष्यमाणं श्लोकं होरेस्-हेम्यान्-उइल्सन् साहेबस्य सकाशे प्रेषयामास —

गोलग्रीदीर्घिकाया बहुविटपितटे कौलिकातानगर्य्यां
निःसङ्गो वर्त्तते संस्कृतपठनगृहाख्यः कुरङ्गः क्रमाङ्गः ।
हन्तुं तं भीतचित्तं विघृतखरशरो 'मेकले'-व्याधराजः
साश्रु ब्रूते स भो भो उइलसनमहाभाग मां रक्ष रक्ष ॥

( प्रेमचन्द्र तर्कवागीशस्य )

( घ )

पूर्व्वोक्तं प्रेमचन्द्र-तर्कवागीशस्य श्लोकं प्राप्य पठित्वा च नितरां मर्म्माहतेन होरेस्-हेम्यान्-उइल्सन् साहेबेन तत्समीपे प्रेषितो वक्ष्यमाणः श्लोकः :—

निष्पिष्टापि परं पदाहतिशतैः शश्वद् बहुप्राणिनां
सन्तप्तापि करैः सहस्रकिरणेनाग्निस्फुलिङ्गोपमैः ।
छागाद्यैश्च विचर्व्वितापि सततं मृष्टापि कुद्दालकै-
र्दूर्वा न म्रियते कृशापि नितरां धातुर्दया दुर्ब्बले ॥
( होरेस्-हेम्यान्-उइल्सन्-साहेबस्य )

---

## कुम्भः ।

( ३८२ )

स्वकण्ठमापीड्य दृढं यथेष्टं
निपत्य कूपादुपनीय वारि ।
प्राणान् परेषामवतोह कुम्भः
परोपकाराय सतां प्रयत्नः ॥

( ३८३ )

गुणयुक्तोऽप्यधो याति रिक्तः कूपे घटो यथा ।
पूर्णो गुणविहीनोऽपि जनैः शिरसि धार्य्यते ॥

छत्त्रम् ।

( ३९४ )

कस्त्वां शिरसि निधत्ते
को वा कुरुते तवादरं लोके ।
छत्त्र स्वयमपि तप्तं
परतापच्चेन्न वारयसि ॥

तमाखुः ।

( ३९५ )

लोकानां गदशान्तये समजनि श्रीताम्रकूटोऽमृताद्
ब्रह्मेशोऽपि कमण्डलुं श्रवणतो धुस्तूरपुष्पं ददौ ।
श्रीकृष्णो मुरलीञ्च वह्निवरुणौ तत्रावतीर्णौ स्वयं
वीणावादकनारदो गुडगुडं ब्रह्माक्षरं गायति ॥
( कविचन्द्रस्य )

तुलादण्डः ।

( ३९६ )

प्राप्य प्रमाणपदवीं
को नामास्ते तुलेऽवलेपस्ते ।
नयसि गरिष्ठमधस्तात्
तदितरमुच्चैस्तरां कुरुषे ॥
( भ्रमरकस्य )

## नस्यम् ।

( ३८७ )

अब्धिं गोष्पदवत् पविं यवसवत् सूर्यञ्च खद्योतवद्
मेरुं भूलाणवद् दवं तुहिनवद् भूमीपतिं भृत्यवत् ।
चिन्तारत्नचयं शिलाशकलवद् देहं निजं भारवद्
भक्ताः पश्यति यस्य तद् विजयतां नस्यं परब्रह्मवत् ॥
( उद्भटसागरस्य )

---

## प्रदीपः ।

( ३८८ )

रे रे दीप तिरस्कृताखिलतमःस्तोमारिवर्गस्य ते
रात्रौ गूढनिजाङ्गपातिशलभाघातेन किं पौरुषम् ।
तत् कर्माचर येन तावकयशो भूयात् प्रभाते पुन-
र्न स्नेहो न च सा दशा नहि परं ज्योतिः पुनः स्थास्यति ॥

---

## मध्यस्थः ।

( ३८९ )

विशेषं विविच्य मध्यस्थो निर्णेतव्यः। सत्यपि मानुषे गुणराशौ प्रकृतिर्निघुषेत् कदाप्यसौ न निर्णेयः। अन्यथा परिणतौ विपत्तिरेव। मध्यधारणमुदाहृत्य कविस्तदेव प्रमाणयति :—

प्रकृतिलघौ मध्यस्थे
गुणिनि शुचावपि न विश्वासः ।
बोधयति वेधकालं
भाषितरण्डो हि मीनस्य ॥

---

## मूर्ख-पण्डित-पार्थक्यम् ।

( ४०० )

शब्दायते श्रुतिकठोरमलं जलेन
हीनो घटोऽर्द्धसलिलोऽपि च रौति घोरम् ।
पूर्णोऽरवो भवति यत् तदयं विशेषो
विद्यावतोऽल्पविदुषः खलु बालिशस्य ॥
( शीलाभट्टारिकायाः )

---

## साधारण-नीतिः ।

( ४०१ )

पण्डिते बहुविद्ये च स्त्रीजने च विभूषिते ।
भोजने व्यञ्जनाढ्ये च को रसो गोरसं विना ॥

( ४०२ )

द्वे कुर्याद् द्वे न कुर्याच्च सन्देहे समुपस्थिते ।
कुर्याद् मूत्रपुरीषे द्वे न कुर्याद् गमनाशने ॥

( ४०३ )

भुक्तोपविष्टस्तुन्दं शयानस्य च पुष्टता ।
आयुर्यङ्क्रममाणस्य मृत्युर्धावति धावतः ॥

---

## सुजन-दुर्जन-पार्थक्यम् ।

( ४०४ )

पनसचूतकुन्दाभा उत्तममध्यमाधमाः ।
फलं पुष्पं फलं पुष्पं कर्म वाक् कर्म वागपि ॥

( विकटनितम्बायाः )

( ४०५ )

आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्धपरार्धयोः सा
छायेव मैत्री खलसज्जनानाम् ॥

( वाचस्पतेः )

( ४०६ )

गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते तदिदमपि नो विस्मयपदम् ।
यतो मेघः क्षारं पिबति कुरुते वारि मधुरं
फणी क्षीरं पीत्वा वमति गरलं दुःसहतरम् ॥

( ४०७ )

उत्कृष्टमध्यमनिकृष्टजनेषु मैत्री
यद्वच्छिलासु सिकतासु जलेषु लेखा ।
वैरं क्रमादधममध्यमसज्जनेषु
यद्वच्छिलासु सिकतासु जलेषु लेखा ॥

## स्वभावाख्यानम् ।

( ४०८ )

असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो
न सङ्गाद् दौर्जन्यं न च सुजनता कस्यचिदपि ।
प्ररूढे संसर्गे मणिभुजगयोर्जन्मजनिते
मणिर्नाहेर्दोषान् स्पृशति न च सर्पो मणिगुणान् ॥

( ४०९ )

काकः पद्मवने रतिं न कुरुते हंसो न कूपोदके
मूर्खः पण्डितसङ्गमे न कुरुते विद्वान् न मूर्खे जने ।
दुष्टः सेवति नो कदापि सुजनं शिष्टो न दुष्टं जनं
या यस्य प्रकृतिः स्वभावजनिता सा न क्वचित् त्यज्यते ॥

---

## स्वर्णकारः ।

( ४१० )

हे हेमकार परदुःखविचारमूढ़
किं मां मुहुः क्षिपसि वारशतानि वह्नौ ।
सन्दीपिते मयि सुवर्णगुणातिरेको
लाभः परं तव मुखे खलु भस्मपातः ॥
(अमरुकस्य)

---

# परिशिष्टम् ।

## तृतीय-प्रवाहः ।

## टिप्पनी ।

(१) पिनाकी—महादेव । शिखी—अग्नि । पाशी—वरुण । पाथोधि—समुद्र । पतग—पक्षी । विश्वरूप—विश्वमेव रूप यस्येति बहुव्रीहि ।

(२) सिद्ध—देवयोनिविशेष । सत्त्वानुकम्पोद्यत—सत्त्वगुणप्रधाना अनुकम्पा सत्त्वानुकम्पा स्वार्थनिरपेक्षा दया इत्यर्थ, सा उद्यता यस्मात् स । गुणगणै—रज सत्त्वतमोभि । संस्कृत—सृष्टिस्थितिप्रलयकार्य्येषु ब्रह्मविष्णुरुद्ररूप तथा निर्मित प्रकटित इत्यर्थ । स्वय तटस्थोऽपि सृष्ट्यादिकार्य्येषु सत्त्वादिगुणै सह समक्त इति यावत् ।

(३) इह भवोदन्वति संसारसमुद्रे यत् ब्रह्म वस्तु कर्णधार तदेव ब्रह्म सम्प्रति इदानीं गिरो वचस मनसश्च विषयीकुरु । अगुरविषयत्वात् केवल वाङ्मनसयो विषय कुरु इत्यर्थ । अत्र हेतुमाह ? कीदृश निरुपाधि भाक्ति परमन्यत् शरीरादि उपाधिध्वंस तत्तथा विशुद्धचैतन्यस्वरूपमित्यर्थं । अतएव सुदुष्प्रापम् । ननु तदा कुर्वतत् प्राप्यमित्यत आह अवनिपर्य्यभिव्यापि सर्वतोभावेन पृथिवीव्यापक सर्वत्रैवास्ति, इत्यर्थं । पक्षे यत यत्नवान् सन् इह मदुक्तौ कर्णधारो भव कर्णे पातय । तत्—उत् अनु इत्यादि सूत्रम् । गि, ओ मनसोऽपि विषयीकुरु । उत् अन अति निर् परा उप, अधि, सु दुर्, प्र, अप, अव, नि, परि, अभि वि, आ अपि सम् प्रति गि—अत्र ओ इत्यव्यय सम्बोधनसूचकम् । एते त्रिंशति गिंसञ्ज्ञा स्यु ।

(४) निर्गुण—दयादाक्षिण्यादिगुणहीन , पक्षे सत्त्वरजस्तमोगुणातीत । निष्क्रिय—धर्म्माधर्म्मरहित , पक्षे अकर्त्ता, जीवात्मा एव कर्त्तृत्वभिमानैत्यत कर्त्ता न तु परमात्मा । निष्कल—कला अनु षष्टिविधा विद्या तद्रहित मूर्ख इत्यर्थं, पक्षे अवयवरहित पूर्ण इत्यर्थ । निरुपाधिक—धर्मचिन्तावर्ज्जित ("उपाधि"

धर्म्मचिन्ता' इत्यमरः), पक्षे देहाद्युपाधिरहितः। अरूप—सौन्दर्य्यहीन, पक्षे निराकार। उपायै—वैराग्यादिसाधनै।

(६) माधव—माया लक्ष्म्याः धव पति। सपत्नी लक्ष्मी हरे प्रिया अभिमता। तस्मिन्नेव—तस्मिन् स्वामिन्येव। स्थिरा—तमेव सेवते इत्यर्थ।

(७) दूना—दुःखिता। मत्सुतगणा—विद्वांसो जना। पद्मासुतस्य—लक्ष्मीपुत्रस्य धनिन इत्यर्थ। आधिनिवारणाय—मनोदुःखमोचनाय।

(८) अचय्यम्—अक्षयम्। सर्व्वसाफल्यमूल—सर्व्वं साफल्यं धर्म्मार्थकाममोक्षरूपफलभागित्वं तस्य मूलम्। भाव—देवविषया राजविषया च रति। जनि—जन्म।

(९) दर्शयते—आत्मानमिति शेष। कुटिला हि स्वस्वामिनोऽनुरागमन्येषु नेच्छन्ति, तथापि भक्तमात्मान दर्शयते इत्यनया तमिति तच्छब्दवाच्यस्य नितरां भक्तवात्सल्य दर्शितमिति भाव।

(१०) भक्तिप्रह्वादीनि विशेषणानि नेत्रपक्षे तनपक्षे च पर्य्यायक्रमेण द्विवचनैकवचनान्तानि। प्रह्व—नम्र आसक्त इत्यर्थ। समाधिनिरते—ध्यानपरायणे। नीतेहितप्राप्तये—नेत्रपक्षे नीते प्रापिते, हितप्राप्तये, तनुपक्षे नीता ईहितप्राप्तये अभीष्टलाभाय। लावण्याना सौन्दर्य्याणां एकौ मुख्यौ महानिधी प्रशस्ताधारौ, पक्षे महानिधि रेफपरत्वात् सन्धौ महानिधी। रसिकतामित्यादि—राधिकानयनद्वयमिव हरेर्नयनयोस्तनोश्च रस वेत्तीति भाव।

(११) केन—केन उपचारेण। अर्च्चयेत्—अर्च्चयितु शक्नुयात्, न केनापीत्यर्थ। तस्मात् मननादिकमेव श्रेय इति भाव।

(१२) सामानाधिकरण्यम्—एकाधिकरणवृत्तित्वं, तव विश्वविश्वम्भर इत्युक्तौ विश्वत्वविश्वम्भरत्वयोस्तुल्याधिकरणवृत्तित्व प्रतीयते। परन्तु विश्वान्तर्गतस्यापि दीनस्य मम भरणाभावात् स सम्बन्धस्त्वयि न घटते। एतेन तव तन्मिथ्यात्वमुचितमेव। अन्वय—सम्बन्धम्। उरीकुरु—स्वीकुरु। जनार्द्दनो भवसि—अभिनवजनार्द्दनोऽसीत्यर्थ। तथाच तव जनार्द्दनत्व हि जनानामसुरविशेषाणामर्दनेनैव न तु शरणागतानां मादृशानामिति भाव।

(१३) प्रकृतिमुखरा—प्रकृत्या स्वभावत मुखरा वाचाला सरस्वतीत्यर्थ ।
चञ्चला—लक्ष्मी । मन्मथ—मदन । शेष—अनन्तनाग । दारुभूत—काष्ठमय ।
(१४) कम्प—कम्पनम्, पक्षे वरुणम्, कमित्यव्यय जलवाचि तत् पातीति
कम्प । गुरु—प्रबल, पक्षे बृहस्पतिम् । विषाद—दु:ख, पक्षे विषपायिन
शिवम् । बलभिद—शक्तिक्षयकर, पक्षे इन्द्रम् । सजृम्भ—सम्यग् जृम्भण,
पक्षे सम्यग् जृम्भा यस्य स तम् । श्वसन—निश्वास, पक्षे पवनम् । उत्कट—
प्रबलवेगम् । लोकमाता—लक्ष्मी । श्लोकेऽत्र चित्रलेखाहरणम् ।
(१५) गजभुक्तकपित्थवत्—गजेन कपित्थान्तर्गतक्षुद्रकीटेन भुक्त खादित यत्
कपित्थफल तद्वत् । 'कपित्थान्तर्गत कीटो गज इत्यभिधीयते'—इत्युत्पलमाला ।
(१६) (ख) क्षुद्र—कृपण । हीनाचार—मूर्ख । सखि—हे सरस्वति ।
(१७) वल्लभ—स्वामी कृष्ण । अन्येन—भृगुमुनिना । वैरिणी—सरस्वती ।
गेहम्—आलय पद्ममित्यर्थ । छेदयन्ति—छेद खण्ड कुर्वन्तीति छेदिनामधातो रूपम् ।
उमेति स्त्रीनामनिर्देश कोपहेतुरिति बोध्यम् ।
(२०) भूति—जन्म, पण—हरधनुर्भङ्गरूपशुल्क ।
(२१) सम्भ्रम—हर्षभयादिजनितमावेगम् । तत्—काठिन्यमित्यर्थ । क्षौणी—
पृथिवी । क्षितिरुह—वृक्ष । विन्दति—लभते ।
(२२) रघूणां कुलपति—सूर्य । माता—पृथिवी इत्यर्थ । प्राणाधीश—
रामचन्द्र । विधौ—भाग्ये । वामे—प्रतिकूले । काम—यथेष्टम् । प्रसरति—
अत्र 'भवति किम्' इत्यपि पाठान्तरम् ।
(२३) 'द्रवति च हिमरश्मावुद्गते चन्द्रकान्त'—इत्युत्तरचरिते । पाथिपदे—
विवाहे, पक्षे अङ्कल्या धारणे ।
(२४) अविश्वस्तै—अविश्वासिभि । प्राणाधिकपरित्यागात् अविश्वस्तता ।
(२५) क्षित्यादिपञ्चभूतघटितोऽयं श्लोक । अनुधज—चतुर्थभूतमरुत्पुत्र ।
पञ्चमग—पञ्चमभूतव्योमविहारी । प्रथमसम्भवाम्—प्रथमभूतक्षितिजां सीतामित्यर्थ ।
तृतीयम्—तृतीयभूत अग्निमित्यर्थ । द्वितीयम्—द्वितीयभूत जल सागरमित्यर्थ ।
(२६) कपरेति—अपराङ्गम कपरमिव यत् भस्म तेन चर्चिता व्याप्ता सकल

तनुः सर्वशरीरं यस्य सः। रुद्रमुद्रासमुद्र—रुद्रस्य शिवस्य या मुद्रा नामाङ्कनानि ताभिः समुद्रं मुद्रायुक्तं शिवनामाङ्कैर्भूषितसर्वाङ्ग इत्यर्थः। मायायोगी—कपटयोगिवेशधारी। रघुरमणेति—रघुरमणस्य रामचन्द्रस्य पुरस्य बटुस्य प्राङ्गणे।

(१७) चेलाञ्चले—वस्त्रप्रान्ते। नाथ—हे रामचन्द्र। योषा—नारी। तपस्वी—मम पतिः गौतममुनिः।

(१८) कलशोद्भवधर्मपत्नीम्—अगस्त्यरमणीं लोपामुद्रामित्यर्थः। चुलुकिताम्बुनिधे—चुलुकितं गण्डूषीकृतं अम्बुनिधिर्येन स तस्य अगस्त्यस्य इति शेषः। उक्तञ्च—'निपीतकालकूटस्य हरस्यापि हि खिलनम्' इति।

(२०) व्रजवासिवारिजदृशां—पद्माक्षीणां गोपीनाम्। पाञ्चालजाया—द्रौपदी।

(२१) मातः—हे यशोदे। मन्थानक—मन्थनदण्ड। ईश्वरः—शिव। सरभस—चौक्य।

(२२) मुरहर—श्रीकृष्ण। पयः—काष्ठ दुग्ध वा। रसताम्—द्रवत्वम्। कृशानु—अग्निः।

(२३) सद्वंश—सुरलोकसम्भूतवंशनिर्मितत्वात्। गुण—मौर्वी उपचिकीर्षादिरित्यपि। धनुः—हरशरासनम्। निर्गुण—मौर्वीरहितं दयादाक्षिण्यादिहीनश्च। सच्छिद्र—सदोष इत्यपि। कुवंश—कौ पृथिव्यां यो वंशो वेणुस्तस्मात् कुत्सित कुलसम्भूतश्च।

(२६) आभीरकन्याप्रियगुणकथने—गोपतनयानां वल्लभः श्रीकृष्णः तस्य गुणावली कीर्तने। श्रीकृष्णलीलेति—श्रीकृष्णस्य लीलाविलासश्रवणे।

(२७) अपाय—अप कोमलतृण भक्षयितुम्। न स्पन्दते—किञ्चिदपि न चलति। रुदति—समूह। कुरङ्गनयनानेत्राम्बुभिः—हरिणलोचनानां गोपाङ्गनानां नेत्रजलैः।

(२८) सुमनोमाला—पुष्पमाला। सुलभा—अन्यव्यवहारादित्यर्थः। मोषित भर्तृकाणां तथा नियमात्। कमलदल—पद्मपत्रम्। दुराप—दुर्लभं गोपीविरह तापशान्त्यर्थं अधिकव्ययनात्।

(२९) पल्लविनी—किसलयिनी ( पल्लवोऽस्त्री किसलयं विटपे विस्तरे वने इति

मेदिनी )। शाखापल्लवसमुदायो विटप । अत्र आमणिबन्ध बाहु शाखा करतल
च पल्लवमिति बोध्यम्। सुषमश्री—सुषमा परमा शोभा लक्ष्मी । आवालिनी—
आलवालविशिष्टा । 'स्यादालवालमावालमावापोऽथ नदी सरित् —इत्यमर ।

(४१) निगम—वेद । मृगित—अन्विष्टम्। कृष्ण एव परब्रह्मेति भाव ।

(४२) प्रयाणसमये—मथुरायात्राकाले । आशालता—श्रीकृष्णस्य प्रत्यागमन-
आशा तद्रूपा लता । विज्ञात—प्रत्यागमिष्यामीति शेष । फलिता—त्वदीय रथ दृष्ट्वा
कृष्णप्रत्यागमनरूप फल सञ्जात यस्या तथाभूता । माधवदूत—श्रीकृष्णप्रेरितदूत
हे उद्धव इत्यर्थ ।

(४३) पुष्टिभाक्—परिपुष्ट । शीतलांशु—चन्द्र । घटयति—रचयति ।

(४४) कोकिलकुले—पिकसमूहे । उज्ज्वलकलनाद—मनोहरमधुरस्वर यथा
तथा कूजति इत्यन्वय । जैमिनिरिति—जैमिनिनामोच्चारणादेव वज्रभयस्य निराकृति
प्रसिद्धा । गरुडेति—गरुडनामोच्चारणात् सर्पभयस्यापि तथा ।

(४५) सुरञ्जन—शोभनरञ्जनद्रव्यविशेष । निरञ्जन—परब्रह्मस्वरूप श्रीकृष्ण ।

(४६) अलिन्दे—बहिर्द्वारप्रकोष्ठे ।

(४७) सुकृतचैत्यवृन्दानि—तीर्थस्थानानि । शक्र—इन्द्र ।

(४८) ज्येष्ठ—पञ्चसु पतिषु इति शेष युधिष्ठिरे । पतिश्वशुरता—'ज्येष्ठभ्राता
सम पितुरिति शास्त्रात् पत्युर्ज्येष्ठभ्राता श्वशुर उच्यते ( भासुर इति प्रसिद्धि )।
अनुजे—सहदेवे । वितथ—पतित्व श्वशुरत्वं देवरत्वञ्च ।

(४९) अलकसीमि—अलक 'माँग' इति भाषा, अलकरूपप्रान्तभागे । दिति
सुताधीश—हिरण्यकशिपु । रोदसी—द्यावापृथिव्यौ । ध्याने—परब्रह्मचिन्तने ।
विश्व—ब्रह्माण्ड विश्वस्य मिथ्याभूतत्वात् । खगी—खगे । अलोपयतेति सर्वमान्वितम् ।
दशावतारवर्णनमेतत् ।

(५१) स्थाणु—शिव पक्षे शाखापत्रादिशून्य वृक्ष । मूलेन हीन—
अनादि पक्षे मूलशून्य । अपर्णा—पार्वती, पक्षे पत्ररहिता । विशाख—
कार्तिकेय, पक्षे शाखारहित । परैरपि उपभोग दत्त कुसुम यस्मै तादृश ।

(५२) शिवायां—दुर्गायाम् । कोकसीधे—काष्ठनिचये ।

(५३) आखुम्—उन्दुरम्। क्रौञ्चपते—कार्त्तिकेयस्य। कलानाथम्—चन्द्रम्। निर्विण्ण—संसारविरक्त।

(५४) षडास्य—कार्त्तिकेय। इतर—अपरतनय। वर्त्तन—जीविकानिर्वाह।

(५५) जीवन—जीविकानिर्वाहोपाय। सद्म—गृहम्। गुरुणा—पुरोहितेन।

(५६) स्वः विन्ते—इत्यादि प्रतिवचनम्।

(५७) जगदम्ब—जगन्मात। त्र्यम्बक—त्रिलोचन शिव। भाव—देवविषया रति।

(५८) मथि—धातु+क्त=मथितं। अतुलनिर्वृतिम्—अनुपमसुखम्। उज्झति—त्यजति।

(५९) सुरतटिनीव्यतिकरसरोषोऽपि—सुरतटिनी गङ्गा तस्याः व्यतिकर सम्पर्कं तेन सरोषोऽपि। गङ्गाधरस्य मम शिरसि गङ्गा वर्त्तते तस्या मतश्च हरस्य पुनर्हरत्वापत्तौ न काचिद् विकृति।

(६०) अपर्णा—पत्ररहितां लतामिति शेष पक्षे दुर्गाम्। रोगनाशिनीं—व्याधिविनाशिनीम् पक्षे त्रितापक्षयकारिणीम्। शूली—शूलयुक्त, पक्षे शिव।

(६१) वामा—सुन्दरी। पशुपतीत्यादि—पशुपतिनयनयो या ईषत् केकर टेर. आलोक अपाङ्गदृष्टि तं कामयते या सा। कैवल्याप्तसीमा—मुक्तिलाभस्य परमोपायरूपा। भवेत्यादि—भवगहनगतानां संसारारण्यनिवासिनां क्लेशनाशी प्रणामो यस्याः सा। कान्तकामा—कान्ते पत्यौ कामा सर्वाभीष्टानि यस्याः सा सर्वथा पतिसेवापरायणेत्यर्थ।

(६२) हे जननि अधमाना श्रुति तव नेत्रकर्णे भासोति वदति तस्मात् त्वया मम दुःखं न दृष्टं आर्तिकातरवचनञ्च न श्रुतम्। इत्य सत्त्वे श्रुतिवाक्यं यदि मय्येव प्रमाणीकरोषि, तर्हि त्वं निस्तारिणी इत्यपि श्रुतिवाक्यात् त्वं मां नूनमेव संसारसागरात् तारयिष्यसीति मे परमो विश्वास इत्यस्य श्लोकस्य निर्गलितार्थं।

(६३) तवे—तवदर्शे। धातु—ब्रह्मा। त्रिगुणमयि—रज सत्त्वतमो गुणात्मिके। भजने—सेवने, सेवार्थे तत्तत्स्थानेषु तेषां ब्रह्मादीनामाश्रयत्वात् तेषां तत्त्वादिस्थानानां तत्तद्रूपत्वमिति भाव।

# परिशिष्टम् ( टिप्पणी )

(६५) दुर्गेत्यादि—विषमसंसारसागरतरङ्गसमुद्भावितभयभ्रान्तजननिवेदितवाक्यम्। मूका—
दैयदयित—दातव्यवस्तु यत् प्रियं तत्। मा भागा—न आगच्छ।
निर्वाणमीति शेष। कथं मां भद्राभद्रं किञ्चिदपि न ब्रवीषीत्यर्थः।
(६६) गिरीशि—हे गिरीशपत्नि। परमोत्कर्षं चरणस्येति शेष। तं—
केशवम्।
(६८) स्व—स्वकीयम्। शवे—शवरूपधारिणि। या दक्षयज्ञे यस्य निन्दा
माकर्ण्य प्राणांस्तत्याज, सैव तस्य वक्षसि पदं निदधे अहो किमद्भुतमिति।
(७०) जनुरन्त—पुनर्जन्मविनाशकम्। मनु—मन्त्रम्। चतुर्वाहः—विष्णुः।
चतुरास्य—ब्रह्माणम्। काशी—मेखलाम्। विष्णुत्वविरिञ्चित्वप्राप्तिहेतू स्थितौ।
शिवत्वप्राप्तिहेतुस्तु भजन्त तव पदमित्युक्त्वा पदं सेवमानः शिवो भवतीत्युक्तं 'पदस्पर्शं
मावाक्षवोऽभूत्महेश' इति प्रसिद्धे।
(७१) सुरतटिनि—गङ्गे। शूली—शूलरोगयुक्तो जनः पक्षे महादेवः।
गदी—पीडायुक्तो जनः, पक्षे गदाधरो नारायणः।
(७२) मुनिना—जह्नुना। सेव्यापि—उपास्यापि। सेवकोपपदगा—उपासकस्य
भगीरथस्य नाम्ना नामधारिणी भागीरथीत्यर्थः।
(७४) दीर्घसम्बन्धात्—गङ्गातीरवासिनामस्माकमाजन्म तस्याः सेवासम्बन्धात्।
पक्षे नराकारं निरकारश्चेत्युभयत्र दीर्घस्वरसंयोगात्। अथ तु गङ्गोपासनामेव
ब्रह्मोपासनां मन्यामहे इति भावः। नाराकारा नीराकारा वा—जलरूपिणीं
गङ्गामित्यर्थः। "नारस्तर्णकनीरयो"—मेदिनी।
(७५) त्रिदोषनाशाय—त्रयो दोषाः आध्यात्मिक आधिदैविक आधिभौतिकश्च
एतेषां नाशाय, पक्षे वायुपित्तादिनाशार्थम्। चतुर्दोषं—दोषचतुष्टययुताम्, पक्षे
चत्वारः दोषाः दोषश्च यस्य तादृशम्। विकत्थसे—सुखदा
चतुर्बाहुः विष्णुः।
मोक्षदेत्यादिनामभिः श्लाघां करोषि।
(७६) अतिश्रवेन—निरतिशयधर्मेण। इष्ट—विदेश्याम्।
(७७) मुरहर—हे श्रीकृष्ण। त्रिपथगा—गङ्गा। 'विष्णुपादोद्भवा गङ्गा'
इति शास्त्रम्।

(७८) प्रमथपतिता—शिवत्वम्। त्रिभुवनेति—त्रिभुवनजनानां ताण्डकारणं मलिनं यस्याः सा तथाभूता।

(७९) व्याल—सर्पः। खगवर—गरुड़। नाग—हस्ती। मिहिर—सूर्य। विप्रभिक्षौ—विप्ररूपसमुद्रस्य।

(८०) धराधरेन्द्रदुहिता—हिमाचलकन्या पार्वती इत्यर्थः। विघ्नकुलान्तक—गणेश। पितृसख—पितृसखः। क्रौञ्चविदारणे—क्रौञ्चनामकपर्वतभेदने। पाणिग्रह—विवाह।

(८१) एतत् फल—मम यथेष्टभोजनाभावरूपम्।

(८३) उत्तमाङ्ग—मस्तके। काशी केवल पञ्चक्रोशव्यापिनी गङ्गा तु लक्षयामा लक्ष यामा प्रहरा दैर्घ्यातिक्रमकालो यस्यास्तादृशी अतिदीर्घा इत्यर्थः।

(८४) (क) स्वर्दीर्घिका—मन्दाकिनी गङ्गा इत्यर्थ। (ख) घर्माम्भ—घर्मजलम्। भगवत—विष्णो। शम्भुनगरे—काश्याम्। तारक—तारकमन्त्र।

(८५) मोमेति—मा लक्ष्मी उमा दुर्गा सावित्री च ताभिः उपेता युक्ता मिलिता इत्यर्थः। रथचरण—चक्रम्। तार्क्ष्य—गरुड़। पत्र—वाहनम्।

(८६) पूतनामारणलब्धकीर्ति—पूतनाराक्षसीवधेन विख्यातनामा पक्षे पूतनामा पवित्रनामा रणलब्धकीर्तिश्च। काकोदर—सर्पं कालियनाग इत्यर्थ, पक्षे अदर नास्ति दर भय यस्य स निर्भय गर्वित इति यावत् तादृश काक जयन्त इत्यर्थ। यशोदया—नन्दपत्न्या, पक्षे यशश्च दया च ताभ्याम्।

(८७) विनायास्त्रं—शास्त्रं शास्त्रज्ञान विना, पक्षे विनायस्य अस्त्र स्वस्यामङ्गल कारणम् भेदमित्यस्य विशेषणम्। कलयति—जानीते। प्रकृति—स्वभाव पक्षे धातु। अभिन्ना—एका। हरिहरयोरुभयोः प्रकृति ह इत्येका एव। प्रत्ययभेदात्—प्रत्यय विश्वास तस्य भेद तस्मात्, पक्षे इ अच इति प्रत्यययोर्भेदात्।

(८८) शङ्ख—पाञ्चजन्य। कपाल—भिक्षाभाजनम्। द्वारवती—द्वारका। नागारि—गरुड़। हिमांशौ—एको राम अपरश्चाक्ष। श्रीवत्स—वक्षःस्थ रोमावर्तविशेष।

(८९) (क) उमाधवपक्षे—"सर्वदा उमाधव शिव त्वां पायात्। येन ध्वस्त-

# परिशिष्टम् ( टिप्पनी )

मनोभवेन त्रिनाशितमदनेन कलिजितो विष्णो काय पुरा स्त्रीकृत । मोहिनीरूप
दर्शनेच्छुना शिवेन प्रेरितो विष्णु पुनर्मोहिनीरूप दधार इति पौराणिकी कथा ।
[ अथवा अस्त्रीकृत इति छेद । त्रिपुरासुरवधकाले विष्णुर्यस्य बाणो बभूव इत्यपि
पौराणिकी वार्ता ] यश्च उत्कर्षेण अवस्थितौ भुजङ्गरूपौ हारवलयौ यस्य यस्मिन्
वा तथाभूत । यश्च शिरसि गङ्गाम् अधारयत् । यद्वा शरीरार्द्धेन गौरीं शिरसि
गङ्गा च इत्यभिप्रायेण चकार । यस्य शिर शशिमत् चन्द्रयुक्त हर इति स्तुत्य नाम
च अमरा आहु । अन्धकस्य असुरविशेषस्य विनाशकर ।—रामचरण तर्कवागीश ।

(ख) माधवपक्षे— सर्वद सर्वाभीष्टदाता माधव त्वां पायात् । अभवेन
जन्मरहितेन येन अन शकट ध्वस्त पादेन परावर्त्तितम् । बले असुरराजस्य जेता ।
काय पुरा अमृतपरिवेषणकाले स्त्रीकृत स्त्रीत्वं प्रापित । अमृताय विवदमानाना
देवासुराणां अमृतपरिवेषणाय मायया नारायणेन मोहिनीरूप धृतमिति पौराणिकी
कथा । यश्च उद्धतभुजङ्गहा—उद्धतस्य उद्धतस्वभावस्य भुजङ्गस्य अघासुरस्य हन्ता ।
यद्वा कालियस्य पीडाकर । आरवलय —अरिसम्बन्धि सैन्य यातीत्यथ । यद्वा
उद्धृतभुजङ्गदार बल यस्य तेन गरुड़न यातीत्यर्थं । अग गोवर्द्धन कृष्णरूपेण गां
पृथ्वीञ्च कूर्मरूपेण योऽधारयत् । शशिन मथ्नातीति शशिमत् राहुस्तस्य शिरोहर' इति
स्तुत्य नाम यस्य अमरा आहु । अन्धकानां यादवानां क्षयकर ( क्षयो निवास )
द्वारकाख्यनिवासनिर्माता । —रामचरण तर्कवागीश ।

(९०) (क) ( गौरीपक्षे ) विश्वम्भरे—हे जगद्धात्रि । भवभिवे—भवरूपे शिवे
अवस्थिते इति शेष । विद्योमत —विद्याकाशरूपब्रह्मवस्तुनोऽपि । प्रथम—वस्तु
इति शेष । योगिनस्तुतिपरा —योगिन स्तुतिपरा' इति पदच्छेद । प्रणिधानदृश्या—
प्रणिधाने योगावलम्बनदशायां या दृष्टिस्तया ।

(ख) ( शिवपक्षे ) विश्वम्भरेश—हे विश्वपते हे ईश । यद्वा विश्वम्भरस्य विष्णो'
ईश उपास्य इत्यर्थ । प्रथम—अनादिमित्यर्थं ।

(९१) राधे धैर्यं मति चन्द्राननां प्रति अभीष्ट कृष्णस्योक्ति । प्रियस्य—कृष्णस्य ।
चेम कस—प्रिय कृष्ण कंसेति सम्बोध्य चन्द्राननां प्रतिवक्ति क्षममिति । दृष्ट'—
अहमिति शेष । राधा का—त्वयाऽद्य यथा राधा दृष्टा तथा मयापि त्वं कश्चो दृष्ट ।

(९३) गोदुह—गोपाला । ह्रीण—लज्जित ।

(९४) मे—ह मात । "म शिवश्चन्द्रमा वेधा मा लक्ष्मीश्च प्रकीर्तिता। मश्च मातरि माने च बन्धने मू प्रकीर्तिता —एकाक्षरकोष ।

(९५) चषक—पानपात्रम् ।

(९६) माधव—अहमिति शेष, एव परत्रापि। घोराहिमर्द्दी—घोर भीषणं अहि कालियसर्पं मर्द्दाति पराजयते य स ।

(९७) मात—इति कार्त्तिकेयस्योक्ति । जीव—इति पार्वत्या उक्ति जीव चिरजीवी इति आशीर्वचनम् । प्रयच्छति—त्वं तात इति शेष । मे—मह्यम् । प्रहिते—प्रेरिते । गुहे—कार्त्तिकेये । विघटयति—विश्लेषयति सति । सन्ध्याञ्जलि—सन्ध्योपासनार्थमञ्जलिपुटम् ।

(९८) लुठति—चाइन्ति । अग्रिमू—कार्त्तिकेय । विचेष्टित—विरुद्ध कर्म । चरित—आचरणम् । मिमीते—परिमाति ।

(९९) एषा अस्या भूमि किं कथं याच्यते इति शेष । त्रैलोक्यमित्युत्तरम् ।

(१०१) केशव—विष्णु , पक्षे प्रशस्तकेश पुरुष । शौरि—शूरो नाम वसुदेवपिता तस्यापत्यम् । चक्री—विष्णु , पक्षे कुम्भकार ।

(१०२) हरि—वानर इत्यर्थमादाय प्रत्युत्तरम् । कृष्ण—कृष्ण इति वानरविशेषण कल्पयित्वाह बिभेमीति । मधुसूदन—मधु पुष्परस सूदयति हरतीत्यर्थमादाय प्रत्युक्ति । ह्रीण—लज्जित ।

(१०३) अमुना कुन्दकुड्मेन—अमुना पुरोवर्त्तिना, पक्षे मालि मु मुकारो यत्र तत्र आदौ मुद्रितेन मुकुन्दकुड्मेन, केवलकुन्दकुड्मेन इत्यर्थ । मुकुन्दकुड्मेनैव मे प्रयोजन न तु कुन्दकुड्मेनेति भाव ।

(१०४) धात है लक्ष्मण । हिमचन्द्रमा—शीतलचन्द्र ।

(१०५) वत्स—हे लक्ष्मण । दैव्या—सीताया । सन्यते—अन्विष्यते ।

(१०८) कुपिता—क्रोधान्विता, पक्षे पृथिवीपालक, । जगतां माता—जगत्प्रसविनी, पक्षे जगद्वासिनां धर्माधर्मकर्मणां परिमाता, फलदानकाले तुलनाकारी इत्यर्थ । अक्षमा—अक्षीमा, [पक्षे अक्षमशील । शौरि—विष्णु ।

# परिशिष्टम् ( टिप्पनी )

(१०९) लोले—इति पार्वत्या उक्ति । ब्रूहि कपालिकामिनि—इति लक्ष्मा उक्ति । लोले इति सम्बोधन यथा चापल्यदोषं सूचयति तथा कपालिकामिनि इत्यपि भिक्षुकपत्नीत्वगर्हां गमयति । पाथसां जलानां पति समुद्र । प्रत्येति—विश्वसिति ।

(११०) भिक्षार्थी स—भिक्षु स शिव, पक्षे त्रिपादपरिमितभूमिभिक्षार्थी विष्णु । ताण्डव—उद्धतनृत्यम् । वृन्दावनान्ते—अन्तशब्दोऽत्र स्वरूपवाचक । मृगशिशु—मृग करी करिवदन गणेश शिशुर्यस्य स गणेशपिता इत्यर्थ ('मृग पशौ कुरङ्गे च करिनक्षत्रभेदयो' इति मेदिनी), पक्षे पशुवाचक । जरठ वृषपति—जरठ वृद्ध स चासौ वृषश्चेति तस्य पति, पक्षे जरठ वृषाणां पति । लीलासलाप—लीलया विलासेन सलाप मिथोभाषणम् ।

(११२) पूर्वचरणत्रये सप्तमाक्षरविलोपात् योऽर्थं प्रतीयते स एव सीताया अभिमत । लघिष्ठेति रावणसम्बोधनम् ।

(११३) हे गौरि मां प्रति वृथा कोपेन किम् कोप मा कुरु इति शिवोक्तौ गौ इति सम्बोधनपद इमाम् इति द्वितीयान्तपद परिकल्प्य पार्वती प्राह ननु भो अहं गौरिति स्वीकरोमीति शेष । कां प्रति कुप्यामि । अथ शिव उमे 'इमाम्' इति पदद्वयस्य पार्वतीकृतविच्छेदमुपेक्षमाण आह 'मयि' मां प्रति कोप इति अनुमानत अनुमानेन अहं जानामि । पश्चात् पार्वती 'अनुमानत' इति शिवोक्तपदस्य श्लेषेण अर्थान्तर प्रतिपाद्याह सत्यमित्यादि—अनुमानत इति तव वचनात् त्वं अनुमानत—न उमा अनुमा उमाव्यतिरिक्ता नारी तस्यां नतत्वमधीभूत इत्यर्थ इति सत्यमेवेत्यर्थं । गिरिभव—पार्वत्या । कुटिला—श्लिष्टा ।

(११४) प्रिये—गौरि । क्रोध न क्रियताम् इति शिवोक्ति । गौरी तु शिववाक्यस्य नक्र कुम्भीर अध क्रियतां त्यज्यताम् इत्यर्थमादायाह स नक्रस्तु भवन्मौलिस्थगङ्गोदरे । मुग्धे—प्रकृतार्थपरिज्ञानमूढे । मानसपूजितम्—मन-कल्पितमर्थे त्यज इति शिवोक्ति । अथ गौरी मानसपूजितमिति पदस्य मानस तदाख्य सरोवर पूजित आहत येनेति समासाश्रयेण हंसरूपमर्थं परिकल्प्य प्राह युष्मन्नियोगस्य कृतम् मदन्तिके नक्रो हंसश्च नास्त्येव तदुभयम् तव शिरधारिण्या

गङ्गायामेव। वक्रे—महावक्त्र विपरीतार्थग्राहिणि। अमु—पूर्वोक्तम्। श्लेष—महावक्त्र अर्थान्तरयोजनाम्। निराकुरु—परिहर इति शिवोक्तिः। गौरी च वक्रे इति सम्बोधनपदं सम्प्रयन्तत्वेन श्लेषमिति पदस्य आलिङ्गनार्थकत्वेन कल्पयित्वा प्रत्युवाच वक्र—कुटिलस्त्वमिति शेषः मया कदा आश्लिष्टोऽसि आलिङ्गितोऽसि, नाहमिदानीं त्वामालिङ्गितवती तत् कथमालिङ्गनपरिहाराय मामेव ब्रवीषीत्यर्थः। वामाङ्गा—अर्द्धनारीश्वरमूर्त्तौ वामे वामभागे अङ्गं देहो यस्यास्तथा पार्वत्या। अन्यत् सुगमम्।

(११५) अनेन श्लोकेन शिवसमीपे नवोढाया पार्वत्या स्वेदादिसात्त्विकभाव-गोपनं वर्णितम्।

(११६) हरशिरसि गङ्गामवलोक्य पार्वती हरं पृच्छति हरस्तु गङ्गां गोपयन् पार्वतीमन्यथा प्रतिवक्ति एषा ते इत्यादि।

(११८) भूपे कूपसाधर्म्यं दर्शयति भूप इति। नमन्नमनसुखावह—कूपो हि नमनेन अवगाहनेन यत् सुखं तत् आवहति जनयति यस्मादसौ न। पक्षे नमतां नमनाय जनाना सुखावह सुखजनकः। कूपस्तावत् गुणसम्बन्धात् रज्जुसंयोगात् पात्रानुसारतः घटीघटादिभेदानुसारेण यादृक् पात्रं तादृगित्यर्थः। नित्यं ददाति पयः इति शेषः, पक्षे गुणसम्बन्धात् विद्यादिगुणवत्तया हेतुना पात्रानुसारत योग्यायोग्यव्यक्तिभेदेन। अन्यत् सुगमम्।

(११९) श्लोकेऽस्मिन् चतुर्विंशत्यक्षरात्मकम् वृत्तचन्द्रिकामते दुर्मिलाच्छन्दः, वाग्वल्लभमते तु द्विमिलाच्छन्दः।

(१११) सर्वं ददासीतिमर्मद्र। हथा—मिथ्या ब्रूयसे त्वमिति शेषः। सर्वशब्दस्य सङ्कोचं दर्शयित्वा तथात्वमुपपादयति नेति। अरय पृष्ठ पृष्ठदेश तवेति शेषः न लेभिरे, त्वं कदापि रणभङ्गेन पलायमानं शत्रूणां स्वस्य पृष्ठं न दत्तवान् शत्रून् पृष्ठदर्शनं न कारितवानसीत्यर्थः। अपिच परयोषितः परस्त्रियः नैव त्वदीय लेभिरे इति शेषः। यत्र लिब्धः पृष्ठ परस्त्रीभिय नैव त्वया कदाचित्र लब्धम्। अत एतदुभयस्य प्रदानं भवतः सर्वदातृत्वं व्याहन्ति। एनेन राज्ञोऽसाधारण वीरत्वं जितेन्द्रियत्वञ्चेति व्याजस्तुतिरलङ्कारः।

(१२२) गी—सरस्वती, शास्त्रज्ञानमिति यावत्। रमा—लक्ष्मी, धनप्राचुर्यमित्यर्थ। ते—लक्ष्मीसरस्वत्यौ। विनयो नास्ति—तवेति शेष। सा—लक्ष्मीश्च। सा—गीश्च। स—विनयश्च, एते त्वयि सन्ति। अत साधारणधनिविद्वद्भ्यो विलक्षणोऽसीति भाव। धनवन्तो विद्यावन्तश्च प्रायश उद्धता दृश्यन्ते। त्वयि—अत्र तुकारोऽध्याहार्य।

(१२३) न जानाति—न ज्ञानवान् इत्यर्थ। न ददाति—न दाता इत्यर्थ। जगती जाया यस्य स, जायाया जानिरादेश। जगतीशब्दोऽत्र पृथिव्यर्थे प्रयुक्त। तेन—भूतलस्थापि भवत स्वर्गगतबृहस्पतिकल्पवृक्षापेक्षया गुणोत्कर्ष इति सूचितम्।

(१२४) ते जना कौपीनधना—कौपीनमात्रावलम्बिन, पक्षे कौ पृथिव्यां पीनधना प्रचुरविभवा। धात्रीफलम्—आमलकीफलम् अन्यभोज्याभावात्, पक्षे धात्र्या पृथिव्या फल भोगैश्वर्यादिकम्। न दन्तिवाजिनिवहा—हस्त्यश्वसमूहा न, पक्षे वाजिनिवहा अश्वसमूहा नदन्ति शब्दायन्ते। क्षिति—क्षय विनाश इति यावत्, पक्षे क्षितिभवि राज्यमित्यर्थ। निजकुल समल कलङ्कित लतम् पक्षे समलङ्कृत सम्यग् भूषित। परमेश्वरेण—सम्राजा।

(१२५) गुणयोगात्—ज्यासंयोगात् पक्षे शीलसौजन्यादिगुणसम्बन्धात्। सन्नत—अवनतकाय, पक्षे विनयनम्र इति धनुषा सह साम्येऽपि धनुर्वक्र त्वन्तु वक्रस्वभावो न। रुचिमत्त्वात्—कान्तिमत्त्वात्। विधु—कलङ्की त्वन्तु न तथा। गभीर—अतलस्पर्श, पक्षे गाम्भीर्यगुणयुक्त। अप्रतीत—अविश्वस्त जलधिर्हिंस्रजलचरसमाकुलत्वात् अविश्वस्त, त्वन्तु विश्वस्त धनुराद्युपमानानां गुणा एव त्वयि सन्ति न तु तेषां दोषा इति तेभ्य समुत्कर्षख्यापनाद् व्यतिरेकालङ्कार।

(१२६) हे उर्वीधर राजन् रम्यकाव्यकार्ये त्वां सत्य निश्चित सत्यवतीभवे—सत्यवती भूत्पत्तिस्थान यस्य स सत्यवतीभू द्वैपायनो व्यास त आचक्षे। सत्यवतीभिति विवन्तनामधातोर्लट् ए। एव परत्रापि। सैनावने—सैन्यगहने यद्वा सैन्यरक्षणे। शरभवे—शरभ कार्त्तिकेय तम् आचक्षे, शरभि इति नामधातो पूर्ववद् रूपम्। भाषणे—संलापे। वागीशयि वागीश बृहस्पतिम् आचक्षे। माणे—रक्षणे विषये। विषये—विष्णुम् आचक्षे। व्याकरणे—दाक्षीकृभवे दाक्षी पाणिनिजननी तस्य

कुक्षि उदरं तस्माद् भूरुत्पत्तिर्यस्य स दार्वीकुक्षिभूः पाण्डिनि तम् आचक्षे। रणे—युद्धे। पृथोदरभवे—पृथा कुन्ती तस्या उदरं भूरुत्पत्तिस्थानं यस्य स तम् अर्जुनम् आचक्षे। वितरणे—दाने। देवद्रुवे—देवद्रुः कल्पवृक्षः तम् आचक्षे सर्वेषां सर्वाभीष्टप्रदस्तम् इत्यर्थः। विश्वम्भराभूषणे—विश्वम्भरायाः पृथिव्याः भूषणे अलङ्करणे। मेरवे—मेरुः हेमाद्रिः तम् आचक्षे। सर्वत्र अहमिति शेषः। अन्ये जना यद्यद् गुणवत्तया जगति तैः सह उपमीयन्ते, त्वं हि तत्सर्वोपमानभूतोऽसीति भावः।

(१२७) असौ—वारिधिः। स—मुनिः अगस्त्य इति शेषः। सद—व्योम। पद—चरणम्। साम्प्रतं पुरीधाम्नि जगन्नाथदेवस्य यन्मन्दिरं दृश्यते तस्य निर्माणं मदेनैव राज्ञा कारितमिति प्रसिद्धिः।

(१२८) मानम् मदीयमिति शेषः जले लवणवत् देव्या लीनं तन्मयम् आसीत्। अतस्तत् प्रतिहर्तुं न शक्नोमि इति पराभवं प्रतिकर्त्तुं हरः महादेवः पक्षे हर नामकः पुरोहितः देव्याः मनोजिहीर्षया चित्तं हर्त्तुमिच्छया तन्मनोहरं तस्याः देव्याः मनोहरं चित्ताकर्षकं किरीटं मुकुटं हरते चोरयति।

(१२९) हस्तन्यस्तकुशोदके—दानार्थं कुशवारि गृहीते सति। भूः—पृथिवी। न कम्पते—यस्मै कस्मैचिद् दानं भवत्वित्यर्थः। सर्वंसहा—यतः सा निखिलं क्लेशं सोढुं समर्था। देवागारतया—देवानां निवासस्थानतया। काञ्चनगिरिः—सुमेरुः। स ज्ञातः दिग्भागाः इत्यतः भवद्भिः येन तादृशस्य भिक्षोरर्थने प्रस्थानेन या दशा खेनार्थस्थितिः तस्याः आशया शङ्कया।

(१३०) निरञ्जनम्—निर्मलम् उत्कृष्टमित्यर्थः, पक्षे अञ्जनशून्यं पवित्रमित्यर्थः। सुदर्शनम्—उभयपक्षे सुन्दरम्। सर्वव्यञ्जनरञ्जनम्—सर्वेषु अन्नभोजनस्य उपकरणेषु सुखदायकम्, पक्षे सर्वेषां मर्यादी अव्यक्तानां पदार्थानां व्यञ्जनेन सगुणावस्थायां व्यक्तीकरणेन रञ्जनं लोकमनःप्रसादजननम्।

(१३१) कुञ्जघाटपत्तने—मुर्शिदाबादप्रदेशान्तर्गत कुञ्जघाटनामक ग्राम महाराज नन्दकुमारस्य जन्मभूमिरिति प्रसिद्धिः।

(१३२) द्वितीयभतृभुगिहा—ऊनकला। अप्यासम्पन्नका—अस्पर्शितिका। अम्बा—मूर्त्ति। पार्थिवसम्बन्ध—भूमिसम्पर्क, पक्षे पार्थिवस्य राज्ञस्तु सम्बन्धः

## परिशिष्टम् ( टिप्पनी )

क्षपाद्दष्टिरिति यावत् । यथा जलबहुल स्वल्पचितिक हि द्रव्य अधिकतरचितिसंयोग विना न कुत्राप्युपयुज्यते तद्वदियमपीति भाव ।

(१३४) अगस्त्यवंशसम्भूता—अगस्त्यकुलजाता ब्राह्मणा इत्यर्थ । वातापि—असुरविशेष , पक्षे निम्बूविशेष । नवकृष्ण—नूतनावतारो श्रीकृष्ण , पक्षे तन्नामको महाराज । कमला—निम्बुविशेष , पक्षे नवकृष्णमहाराजस्य सहधर्मिणी ।

(१३७) भिक्षाशय—भिक्षालब्धद्रव्यस्य पात्रम् । रोहिणी—चन्द्रपत्नी ।

(१३८) त्वत्कीर्त्तिशीतकिरणे—तव यशोरूपचन्द्रे । सपत्नीत्यादि—स्वस्या पति तस्मिन् समय उभयो सौन्दर्यादिना तुल्यत्वात् को मे पतिरिति सन्देहस्तेन जातशङ्का पातिव्रत्यभङ्गभयेन भीता सती । कज्जललाञ्छनेन—कृष्णवर्णाञ्जनचिह्नेन । प्रेयांस—प्रियतम गगनचन्द्रम् । आङ्कयत्—अङ्कितमकरोत् । कलङ्क—कुकर्मजो दोष । नवद्वीपेश्वर—

(१४०) आलीवर्द्दिनवाब—वङ्गविहारोत्कलानामधिपतिम् । नवकृष्णभूपतिम्—कलिकाताशोभा नवद्वीपाधिपति महाराज कृष्णचन्द्रम् । बाजाराधिपति महाराजं नवकृष्णम् ।

(१४१) मातृतात—मातामह आलिवर्द्दिनवाब इत्यर्थ । अल्लामुख—अल्लेति परमदेवताया नाम मुखे यस्य स । सुनसरमुलुक—सिराजद्दौलानवाबस्य नामान्तरम् ।

(१४२) मुक्तादिवर्ण—खण्डितायामर , लोकेऽस्य शवुपक्षे आत्मात्मत्याग इत्यर्थ । वैकुण्ठाभिप्रणीत—(समासपक्षे) वैकुण्ठ विष्णु अभिप्रणीत आराधित येन स , ( शत्रुपक्षे )—कुण्ठा सङ्कोच अभिप्रणीता सम्यग्रचिता येन स । कोदण्डोदारनामा—( समासपक्षे ) कोदण्डेन धनुषा उदार प्रशस्त नाम यस्य स , ( शत्रुपक्षे )—दण्डेन दण्डप्राप्त्या उदार विख्यात नाम यस्य स, दण्डग्रहणेन अपयशोभागीत्यर्थ । अन्यत् सुगमम् ।

(१४४) गन्धवाहाधिकविहितजवा—वायोरप्यधिकवेगशालिन । तिग्मांशुकन्या—सूर्यतनय—यमुना इति यावत् ।

(१४५) मोऽयं—मसीसङ्गम । नूरदीन—शाहाङ्गीर-बादशाहस्य नामान्तरम् ।

(१४७) सम्भाविता—आदर कृता। दिल्लीवल्लभ—भत साजाहान बादशाह। आसन—वासस्थान आग्रानगरीत्यर्थं। मधुपुरी—मथुरा।

(१४८) असौ दारा ( दारासिक ) साजाहान सम्राजो ज्येष्ठपुत्र।

(१५३) दुरूहवृत्ते—दुरूहश्लोकाना दुतरचनायाम्।

(१६२) गुम्फ—ग्रन्थनम्। कुम्भी—हस्ती। पञ्चानन—सिंह। कविविधौ पञ्चसंख्यकवदनविशिष्ट इत्यपि प्रतीयते।

(१६३) विसर—विस्तर सम्भार इति यावत्। उट्टङ्किता—उत्कीर्णा उल्लिखिता इत्यर्थ।

(१६४) रघुकारे—कालिदासे। दाक्षीपुत्रे—पाणिनौ।

(१६५) भा—दीप्ति पक्षे यश इत्यर्थ। रवे—रवेरिव ( लुप्तोपमा )। माघस्य—माघकविविरचितशिशुपालवधकाव्यस्य, पक्षे माघमासस्य।

(१६६) 'दक्षिन पदलालितामि ति दाक्षिणात्यदेशीय पाठ।

(१६७) माघेन—तन्नामककाव्येन, पक्षे माघमासेन। पदक्रमे—सुप्तिङन्त पदविन्यासे, पक्षे चरणक्षेप। भारवे—तन्नामककवे ( स्मरत इत्यस्य कर्मवि वक्षा ), पक्षे रवे सूर्यस्य भा किरणान।

(१६८) बाणभट्ट मयूरकवेर्जामातासीदिति प्रसिद्धि।

(१६९) असौ मुरारिकविरेव अनर्घराघवकार। अनकोऽस्य भट्टश्रीवर्द्धमानो जननी च तन्तुमती। भवभूतिमनादृत्य निर्वाणमतिना मया। मुरारिपदचिन्तायां मिदमाधीयत मन'—कस्यचित।

(१७०) कान्यकुब्जमहाराजो यशोवर्मा प्रसिद्ध कविरासीत्। तस्य सभा वाक्पतिराजभवभूतिभ्यामिव समलङ्कृताऽऽसीत्।

(१७२) मौग्ध्यमधुरम्—अतीव मनोहरम्।

(१७७) गाम्—पृथिवीं भूमिमित्यर्थ। शाङ्गारप्रकरा—प्रज्ज्वलिताङ्गारपुञ्जाम्। अमर्षम्—असहमान। रेङ्गत्—चलत्।

(१७८) अकिञ्चिद—मिथ्याप, गङ्गाजलसंसर्गाद निर्दोष इति यावत्। प्रियतमस्य दोषदृष्टि प्रायशो न भवतीति विप्रियसङ्गति। मुक्ति—मोक्ष, पक्षे मोचन विरेचनमित्यर्थ।

# परिशिष्टम् ( टिप्पनी )

आरटित—शब्द । करभ—उष्ट्र।

(१७९) विलोचनहारि—नेत्रतृप्तिकरम्।

(१८०) माकन्दम्—आम्रम्। मकरन्दतुन्दिल—प्रचुरमधुयुक्तम्। कर्णारुन्तुद—श्रुतिकटु। शङ्केत—मन्येत।

(१८२) परभृत—कोकिल। गोष्ठी—सभा।

(१८३) भिल्लार्भका—भिल्ला म्लेच्छजातिविशेषास्तेषामर्भका बालका।

(१८४) अरविन्दवनैकबन्धु—पद्मसमूहसुहृत्। चक्र—चक्रवाक।

(१८८) प्रियतनयतया—तनयवात्सल्येन। दत्तहुङ्कारमुद्रा—दत्तहुङ्कारसङ्केता। धेनु—सवत्सा पयस्विनी गौ। मूर्द्धा—मस्तकेन। आहताहता—पुन पुन पीडयित्वा। अनु—पश्चात्। प्रस्नुत—क्षरितदुग्धम्। ऊध—स्तनम्। किञ्चिदित्यादि—किञ्चित् ईषत् कुञ्चं वक्रम् एकं जानु यस्य तादृशस्य। अनवरतेत्यादि—तथा अनवरत चलत् अस्थिर चारु सुन्दर पुच्छ यस्य तथोक्तस्य। विद्योतत्क्षीरेति—विद्योतन्ती चरन्ती या क्षीरधारा तस्या लवेन लेशेन शबल नानावर्णं मुखं यस्य तथाभूतस्य। आतृप्ति—तृप्तिपर्यन्त तर्णकस्य—वत्सस्य। उत्कर्णं—उद्गतौ कर्णौ यस्य तम्। वत्सस्येति शेष। लेढि—स्वदते।

(१९१) परिमलबहुले—सुगन्धपूरिते।

(१९२) दानान्वितलोचन—दानेन खण्डनेन वितरणेन वा अन्विते विलोचने यस्य स।

(१९४) असौ परमविदुषी जयन्तीदेवी फरिदपुरजेलान्तर्गतकोटालिपाडा-निवासिन प्रसिद्धनैयायिकस्य गोकुलचन्द्रसार्वभौमस्य भार्यासीत्। तौ उभौ मिलित्वा "आनन्दलतिका' नामक ग्रन्थमेकं रचयामासतु। आनन्दलतिकायन्थो येनाकारि स्त्रिया सह' इतीव वचन ग्रन्थशेषे-प्राप्तम्।

(१९६) वेल्लति गतीत्यर्थं। हरिद्दन्तावला'—दिग्दन्तिन।

(१९७) कीटस्पृष्ट—शङ्खो हि कीटविशेषस्यावास। अन्त—मध्ये। आराद् सम्भव—लवणजलसमुद्भूत, एतेनास्य जन्म च निन्दितमिति सूचितम्। शून्य—अन्त शून्य असार इति यावत्। इत्थं बहुदोषदूषितोऽपि शङ्ख केन गुणेन श्रीपतिनिकटे विष्णुसन्निधौ स्थितिं लेभे इति साक्षेप प्रश्न। कश्चिद् गुणहीनोऽपि कस्यचित् गुणिन प्रीतिपात्र भवतीति भाव।

(१९८) कूजितमञ्जुलशालके—विहगध्वनिविशिष्टशालसमूहे।

(२००) चात्मलचत्याग—२तेन महती त्यागशीलता दर्शिता, निर्यत्नोपनते—अनायासलब्धे। वृत्ति—जीविका। एकत्र—एकस्मिन् पक्षे। चर्या—आचारणम्। अनृजुवर्त्मता—वक्रगति, पक्षे कपटव्यवहार। वक्त्रे द्विरसना—मुखे जिह्वाद्वय। पक्षे वाक्यनिष्ठाभाव। वीक्षण—दृष्टि, पक्षे विषवद्दृष्टि। भोगिन्—सर्प, पक्षे भोगासक्त।

(२०२) सित—शुभ्रम्। कज्जलाभ—कृष्णवर्णम्। चीयते—वर्द्धते। अप चीयते—मन्दीभवति। उभयत्र कर्मकर्त्तरि प्रयोग।

(२०४) गिरिकुहरे—पर्वतगुहायाम्।

(२०७) त्रपाश्यामा—त्रपया लज्जया श्यामवर्णा। पनसम्—कण्टकिफलम्। लाङ्गलिफलम्—नारिकेलम्।

(२०८) अलिन—वृश्चिकस्य। कदलीमूलरसेन वृश्चिकदंशनजनितज्वाला निवार्य्यते।

(२०९) करटालय—काकवसति। भूतनिकेतन—देवयोनिविशेषवासस्थानम्।

(२१०) सम्भूति—जन्म। परिमल—सुगन्ध। गीर्व्वाणचेतोहर—देवानां मनोमोहन। दातृगुणोत्कर—दानकर्त्तृगुणसमूह। अर्थीत्यादि—अर्थिप्रवराणां याचकश्रेष्ठानां या अर्थिता तस्या अर्पणविधौ दानविषये। विवेक—ज्ञानम्।

(२११) प्रेङ्खत्—चलत्। श्रीखण्ड—चन्दन।

(२१२) अलिना—भ्रमरेण। उरीकरोषि—अवलम्बसे, प्राप्नोषीति यावत्। कुशेशयदृशा—कुशेशयं पद्मम् तद्वत् दृशो यासां तासां, कमललोचनानां रमणीनामित्यर्थ।

(२१४) गदराशिनाशनिपुण—रोगसमूहविनाशदक्षम्।

(२१५) स्व मूल—स्वीय मूलदेशम्। नोपयोगमगमत्—आनुकूल्य न चकार।

(२१६) उलूपविटपी—उलूखड' इति भाषा।

(२१७) उम्बर—रे धुस्तूर। पिशाचपतिना—महादेवेन। चन्द्रोपल—चन्द्रकान्तमणि। वार्द्धि—समुद्र।

(२१८) मज्जीवनम्—मम प्राणस्वरूपम्। जीवनम्—जलम्। तत्र—जीवनत्र। प्रसारितदृशा—विस्तारितपक्षा। मित्र—सूर्ये।

(२२१) कर्परैरिति—कर्परमिश्रिता मृण्मयाभि रचितम् आलवाल यस्य स। पलाण्डु—पेंयाज इति भाषा।

(२२३) श्रीमन् मरुत्—हे शोभासम्पन्नवसन्तसमय। विलूना—छिन्ना।

(२२४) मन्दार—मादार इति भाषा। वृति—वेष्टनम्, बेड़ा इति भाषा।

(२२५) मालव—हैमन्तिकधान्यानि।

(२२६) मधुलिह—भ्रमरा। माध्वीक—मधु। बलिभुज—काका।

(२२७) करीन्द्रम्—ऐरावतम्। पौलोमीपति—शचीपतिरिन्द्र इत्यर्थः। मथने—समुद्रमन्थने। मन्दरगिरे—हे मन्दाद्रे। सरल शैलाना—पर्वताना रक्षक। रत्ननिलय—रत्नाकर समुद्र इत्यर्थः। अददात्—ददौ

(२२८) आखोट—वृक्षविशेष 'हिंघोअर' इति भाषा। रसाल—आम्र। विमर्श—उत्तमाधमविवेक।

(२३०) आचकर्ष—कर्षयाम्। सप्तसुतय—मरीचि अत्रि अङ्गिरा पुलस्त्य पुलह क्रतु वसिष्ठ। विलासवसति—लीलाभूमि। पिशिताशनाना—रिपुजनाना राक्षसाना वा।

(२३२) पल्लव—विस्तार वन वा।

(२३४) जलनिधि—बहुजलस्य। चण्डांशुरिति—चण्डातपप्रखरसूर्येव।

(२३५) विपत्ती—पाथोधि। नीरपदकरसिकै—जलपानानुरागिभि अध्वगै—पथिकै। प्रभिन्नत—स्वच्छ।

(२३८) अविराम—सम्प्रति धनाढ्यो नीच इव रविरुष्ण तपति यद्वत्साधो जन मिव यथा खलति तथा वक्र सूर्यविशेष सर्वं खलति। पश्चात् सुगमम्।

(२४१) (क) पतङ्गपाकसमये—पतङ्गस्य शालिधान्यविशेषस्य पाकसमये परिपाककाले। पतङ्गपतिविक्रमा—पतङ्गानां पक्षिणां पति गरुड तस्य विक्रम इव विक्रमो येषाम् ते। पतङ्गस्य—सूर्यस्य। पतङ्गा—शलभा। पतङ्ग शलभे शालिभेदे पक्षिसूर्ययो —मेदिनी।

(२४२) प्राची—पूर्वदिक्। पिङ्गा—पिङ्गलवर्णा। रसपति—पारद। ग्राम्यसदसि—ग्राम्यजनसभायाम्। द्रविणरहितानां—निर्धनानाम्।

(२४३) घूकालीं—पेचकसमूहम्। लोकालि—जनसमूहम्।

(२४४) (क) हृता अन्येनापहृता नववध्वो येषां तादृशानां पुरुषाणाम् अयम् अम्भोधिनिमज्जनरूप पन्था। करैः—किरणैः, पक्षे हस्तैः।

(ख) अध्वान्—रामादीन्। व्यामर्षात्—क्रोधात्। स्वनगतघनोर्मिम्—शब्दितोत्तालतरङ्गम। करैः—किरणैः, पक्षे हस्तैः।

(२४५) उलूका—पेचका। चिरात्—(अव्ययम्) दीर्घकाल व्याप्येत्यर्थः। निद्रामुद्रां—निद्राचिह्नम्, निद्रया नेत्रनिमीलन वा।

(२४८) तत्र—तयोर्मध्ये। क्रकचनिकरैः—शङ्खभेदकास्त्रविशेषैः।

(२४९) गुञ्जया सह—गुञ्जा—'कुंच' इति भाषा। तोलयन्ति—ऊर्ध्वपरिमाणेन समीकुर्वन्ति। श्लोकेऽत्र भुजङ्गप्रयातच्छन्दः।

(२५०) (क) सच्छिद्र—छिद्र रन्ध्र, पक्षे दोष। वक्र—कुटिल।

(ख) अलिकुलैः कमलमिव कज्जलैरधिकमल रञ्जितमित्यर्थः।

(ग) विधिना इदमेवादिष्ट, हे श्रवण त्व कर्णगत भव श्रुतिमात्रे तिष्ठ, कामिनीकाञ्चनयास्तत्त्वज्ञानपरिपन्थित्वाद् व्यवहारससर्गं मा कुरु। तु किन्तु सदर्थं विधात्वाक्यार्थम् अजानद्भिः बोद्धुमधर्मैमर्दैरित्यर्थः। तेन—स्वर्णेन।

(२५१) दावविधुराणि—दावानलदग्धानि। रिक्त—शून्य जलरहित इत्यर्थः।

(२५२) रसा—पृथ्वी। पूषकरोत्करैः—पूषः सूर्यस्य कराणाम् उत्करैः समूहैः। एकान्तेन—सङ्गतेन। अन्तरागतम्—अवसरप्राप्तम्। स्वान्तेन—चेतसा। अभित—सम्मुखे।

(२५३) असमञ्जसम्—अयोग्यम्। मण्डूक—भेक।

(२५४) विवस्वान्—सूर्यः। मीनमेषवृषाणां क्रमपाठात् भोगवासनाया उत्तरोत्तर प्राबल्य सूचितमिति।

(२५६) खलानां—सदसद्विवेकविधुराणाम्। अस्तामद—अस्ता नष्टा चामदा यस्मिन् तद् यथा तथा। जठरपिठरीपूर्त्यै—उदररूपस्थालीपूरणाय। गोपवेषस्य विष्णो—श्रीकृष्णस्य। गुणगणनया—गुणकीर्तनरूपस्तोत्ररचनया प्रायश्चित्त कुर्याम्।

# परिशिष्टम् ( टिप्पनी )

(२६०) कुम्भकर्णायते—कुम्भकर्णवत् दीर्घनिद्रां याति। सन्देशे—सम्वादवहने। वस्तुनिरीक्षणे—द्रव्यदर्शने।

(२६१) स्तेयव्रते—चौरकर्मणि। मृषाजल्पेषु—मिथ्याकथनेषु। कोल—शूकर।

(२६२) वातपित्तकफादयो धातव उच्यन्ते। वैद्यकनये—वैद्यशास्त्रे। तरल यन्त—व्याकुलीकुर्व्वन्त।

(२६३) सागरस्य रावणसन्निहितत्वादिति।

(२६५) अन्वेषयता—अन्वेषणम् अन्वेषण कुर्व्वता। तत्करोति तदाचष्टे इति णिच् तत शतृप्रत्यय।

(२६६) दृढतरं निबद्धा मुष्टिर्येन पक्षे यस्मिन् तस्य। एकत्र दृढमुष्टिबन्धन धन रक्षत अन्यत्र धारणकाले। कोषे धनागारे निक्षिप्तस्य अपहरणादिभयात् सदैव दृगदृष्टे, पक्षे कोषे आवरणे स्थितस्य। सहजमलिनस्य—नीचस्वभावस्य, पक्षे स्वभावत कृष्णवर्णस्य। आकारत—आकृत्या आकारेण वर्णेन च।

(२६८) वधूटी—बाला वधू। अनु—सह।

(२६९) अनवद्येति पद परस्य यथायथमं लिङ्गव्यत्ययेनान्वेतव्यम्।

(२७१) केदारीनां पद्मादिलादीनाम् असत्त्वेऽपि तत्कथनात् तेषां तद्वत् कार्य्यकारित्वमिति बोध्यम्। प्रसिद्धानि नीलकवयकादीनि पञ्च, धनन्तरिप्रपणकादीनि च नव इति चतुर्द्दशरत्नानि।

(२७२) तत—पूर्णचन्द्रे। कमलालये—इत्यनेन विषदृष्टित्वेन सूचित।

(२७४) अर्भकम्—शिशुम्। कर्पटम्—वस्त्रम्।

(२७५) त्रुटा—रहस्यस्य 'त्रुटि' इति भाषा। अध्यर्णशलागम'—अध्यर्ण आसन्न आगमा आगम' यस्मिन् तादृश काल।

(२७६) मयि जीवति सति मामगा—अथ मुक्यान्तर गच्छन्ति यासादृश्यो न। यद्यपि क्षुधा तृष्णा च कदाचिन्मां मुञ्चति आशा तु न क्षणमपि।

(२७८) सदृशा—स सम्यक यशो यद्गण यस्या' सा, यथाविध परिवर्त्तिता अभूदिति शेष।

(२८१) जनस्थान—दण्डकारण्यमध्यपाती भूखण्डविशेष , पक्षे लोकालय । *कनकमृगीसि—कनकमय मायामृग तद्विषयिणी तृष्णा लिप्सा तदन्वितधिया*, पक्षे कनकमेव मृगतृष्णा मरीचिका तदनुगतबुद्धिना । अयि वैदेहि । इति वच । प्रतिपदम्—पदे पदे । उदश्रु—सजलनयन यथा तथा । प्रलपित—वृथा कथित, पक्षे वै इति पादपूरण । देहि इति वच, अन्यत् सुगमम् । लङ्काभर्तु—रावणस्य वदनानां या परिपाटी अनुक्रमस्तस्यां इषुरचना बाणवर्षण कृता, पक्षे ईषत् भर्ता कामर्ता निकृष्टस्वामी तस्य समीपे वदनपरिपाटीषु गुणकथनप्रकारासु रचना अलम् अत्यर्थं कृता । कुशलवसुता—सीता कुशलवौ सुतौ यस्या सा, पक्षे कुशलानि पटूनि योग्यानौचित्यं वसूनि धनानि यस्य तस्य भावस्तत्ता । *अधिगता—प्राप्ता ।*

(२८३) विगतकलह—सति द्वितीये आभरणे कलह सम्भवेत् अत्र तु तदभावात् कलहाभाव इति भाव ।

(२८४) शातयति—पातयति । क्षपयति—नाशयति ।

(२८५) वान्धाला—जघन्यहर्म्यविशेषा ( 'वैलेड़ा' इति भाषा ) । कुपिठर-जठर—कुत्सितपाकस्थालीरूपजठर । गण्डूपदाना—किञ्चुलुकानाम् । कर्पटे—वस्त्रे ।

(२८७) सकल—सर्वं पैतृकं धनम् । लयं—नाशम् । ८—दारिद्र्य सहोदरम् । मत्—मम ।

(२८८) मानसुता—मानस्य सुता मम आद्यवनिता प्रथमा स्त्री । अपरा वनिता भिक्षा दैन्यस्य कन्या । तातैश्वर्यविगर्विता—तातस्य दैन्यस्य ऐश्वर्येण प्रभुत्वेन विशेषेण गर्विता । एतेन दैन्यस्य प्राबल्यं सूचितम् ।

(२९०) कृता—दैन्यदस्युरिति शेष ।

(२९६) मत्सरजुषा—खलानाम् । दर्पह—दुर्बुद्धि । कासारे—सरसि ।

(२९७) अर्थिजनोपघातम्—याचकजनानां विघ्नम् ।

(२९८) आलय—शाला । विरुपाक्षता—विकटलोचनत्व विशृङ्खलमिति यावत्, पक्षे शिवत्वम् । सङ्गे—सम्पर्के समीपागमने इति यावत् । विरोचनत्व दैत्यत्वम्, पक्षे सूर्यत्वम् । शशिकलाकृति—शराकारसिद्धमात्र, पक्षे चन्द्रत्वम् । वक्रतुण्डरचन—वक्रेण वक्रभावापन्नेन तुण्डेन मुखेन रचन वाक्यविन्यास, पक्षे वक्रेण

# परिशिष्टम् ( टिप्पनी )

शमिना कृत तुच्छस्य सुखस्य रचन निर्माण तद्रूप गणपतिभावम्। अपर्णास्मता—
पर्णस्यापि अभावशालिदरिद्रस्वरूपताम् पक्षे अपर्णा दुर्गा तत्स्वरूपता शक्तिरूप
मिति यावत्।

(२००) शेष—अनन्तनागे। भवभराक्रान्ते—ब्रह्माण्डभारनिपीडिते। श्रिया—
लक्ष्म्या। लक्ष्मीवन्त—लक्ष्मीविशिष्टा धनिन इत्यर्थ।

(२०१) सरसिरुहरुचां—कमलकान्तीनाम्। अन्तरङ्गे—आत्मीये तरुणस्य-
कान्तिविशिष्टैरित्यर्थ।

(२०२) करीरद्रुमे—वशाङ्गरे कण्टकिवृक्षविशेषे वा। खर—गर्दभ
अश्वतरो वा।

(२०३) सङ्गे—युद्ध। हेलाम्—अवहेलाम्। गरुत्मन्त—गरुडम्। मदन-
भृतां—सुखविशिष्टानां जनानाम्।

(२०४) द्व्यादिगुणान्वित—द्विविचतुरादिभिर्विषयैरन्वित पक्षे द्विविचतु
रादिभिरङ्कैर्गुणित। लाकृति—लृकारस्य आकृतिरिव आकृतिर्यस्या सा नवम
सख्यात्यर्थ। द्व्यादिसख्यया नवमसख्याया गुणे कृते यो राशिर्भवति तस्य योग
फलेनापि पुनर्नवमसख्यैव जायते। यथा २×९=१८ १+८=९। एव
त्र्यादिभिर्गुणितेऽपि।

(२०८) सप्रस्वेद—घर्मार्त। पुलकपरुष—रोमाञ्चान्वित। सधनो—
धनशील धान्यश्च। सप्रकम्प—कम्पयुक्त। सान्तर्दाह—दरिद्र अग्रचिन्तया
ज्वरी च ज्वरप्रकोपाद अन्तर्दाहविशिष्ट। प्रशिथिलधृति—च्युतधैर्य उभयोरपि
विचारबुद्धेरभावात्। शास्त्रबोध—चिन्तया ज्वरप्रकोपेण च शुष्कसुखनष्ट। प्रधन—युद्धम्।

(२१२) गजघटासघट्ट सन्तरम्—मदमत्तगजसङ्घर्षदारुणम्।
सर्पन्ति—गच्छन्ति।

(२१४) खेन प्रमुदितेन—स्वरचितेन छद्मटङ्कोकेन।

(२१५) धिक्काराय—धिक्काराय पातयितु कथयिति शेष। एवं परत्र। पाप
हि अस्थानोपन्यासजनितमिति बोध्यम्।

(२१६) हारे—सगुभि। साडम्बरे—वैचित्र्याडम्बरयुक्ते। अम्बरे—वस्त्रे।
अभिपीडितो य पाण्डुमतकर पुष्पचन्द्र तस्य स्पन्देन दरता अमृतेन उपमा दीयते।

(२१७) तर्कु—'टेको' इति भाषा। स्वपोषणार्थं कृतयत्नो जन सिद्धि लभते इति भाव ।

(२१८) विद्यावदाल—विद्यया अवदात शुभ्र निर्मलमित्यर्थं । विष्टपकष्ट हारिणि—भुवनदु खविमोचके ।

(२२०) श्राव्यताम्—गुरुणा पाठ्यताम्। कृतफलम्—सफलम्। ग्रहम्—ग्रहणम अर्थबोधमिति यावत्।

(२२३) दिविषद —देवा । दूर विहाय—दूरवर्त्ति आकाश स्वर्गमित्यर्थ । अर्थिसार्थात्—याचकगणात्।

(२२५) निगमा—शास्त्राणि। दाम्पत्यसाम्ये गृहाश्रम प्रशस्त, तद्वैषम्ये तु निन्दा इति भाव ।

(२२७) श्रीद कुबेर तस्य मित्रम्। लक्ष्मीकुबेरहिरण्यानां यथाक्रमसम्बन्धात् गोविन्दादीनां सम्मान इत्यर्थ ।

(२३०) पृथुपथे—सुविस्तृतपथे स्वर्गगमनपथे इत्यर्थ । ससारेति—ससाररूप पृथु विस्तृत भीषणमित्यर्थ मरुस्थल तस्मिन्। सुरतरु —कल्पवृक्ष ।

(२३२) गुणवता गुणानाम् उपादाता ग्रहीता यावन्न भवति तावत् त्रिभुवन-महार्घा त्रिषु भुवनेषु महामूल्या अपि गुणवतां गुणा असत्कल्पा मन्दाभिप्राया भवन्तीति शेष । अत्र दृष्टान्तमाह—दैत्यारेर्विष्णो हृदयवसते हृदि धारणात् प्राक् अपि स प्रसिद्ध कौस्तुभमणि अम्भो समुद्रे किं नासीत् अपि त्वासीदेव। क्वचित् कुत्रापि अस्य मणे श्रुति श्रवणमपि अभूत् उपादातुरभावाभाभूदेव इत्यर्थ । गुणपरिचयैव गुणवतां माहात्म्यम् आश्रयमूलमेवेति भाव ।

(२३३) रत्नाकर—समुद्र स्वरत्नै किं कुरुते आत्मन किं हित साधयति न किमपीत्यर्थ । एव सर्वत्र। श्रीखण्डखण्डै—चन्दनकाष्ठै । विभूति—सम्पत्।

(२३४) मन्दाध्वक्रमराजहसनिचय—अध्वानं पथि क्रम पादविक्षेप अध्व क्रम । मन्द अध्वक्रमो यस्य स चासौ राजहसनिचयश्चेति।

(२३५) व्यलीकानि—अपराधान्। दग्धमन्दिरसारे—( वह्निविशेषणमेतत् ) —' मन्दिरसार श्रेष्ठगृह येन तादृगपराधकारिण्यपि ।

(२३८) सदुद्भव —तस्मात् कुम्भात् उद्भवो यस्य स अगस्त्य इत्यर्थ ।
(२३९) परे —अन्यै स्तुतिपाठकै , पक्षे द्विलिपंगुरादिभिरङ्कै । अङ्किता-
नामपि—उत्कर्षं गमितानामपि, पक्षे गुणितानामपि। लाकृति —लृकारस्य
आकृतिरिव आकृतिर्यस्या सा नवमसख्येत्यर्थ । द्व्यादिसंख्यया नवमसख्याया गुणे
कृते यो राशिर्भवति तस्य सङ्कलनेनापि पुनर्नवमसख्यैव जायते। यथा २×९=१८,
१+८=९। एव त्र्यादिभिर्गुणेऽपि।

(२४०) मौखर्य—वाचालता। मौन—तूष्णीभाव ।
(२४१) विहगखल —विहगेषु खल । 'पक्षिधूर्तस्य वायस इत्यत्र ।
अतिपन्न—प्रतिचक्षम् । त्रिलोल —चञ्चल । काकोल —द्रोणकाक ( दाँडकाक
इति प्रसिद्ध )। कीर—हे शुक ।

(२४२) कामन्धा धनु —अभीष्टदायिनी गवी । तृतीय नेत्र—विद्याया
सूक्ष्मदर्शनसाधनत्वात्। सत्कारायतन—समादरभूमि ।

(२४४) सद्वंशजातम्—उत्कृष्टवेणुरचित पक्षे सत्कुलसम्भूतस्य। गुण
कोटिनम्र—गुणेन मौर्व्या कोट्यौ कोटिद्वयं नम्र पक्षे बहुगुणैरवनतस्वभावम्।
असव्य—दक्षिणे। सत्पक्षयोगात्—सद्भ्यां वर्तमानाभ्यां पक्षाभ्यां पार्श्वद्वयनिहिताभ्यां
पक्षिपक्षाभ्या सह योगात् पक्षे सता साधुना पक्षेण सहायेन सह सम्बन्धात्।
उक्तञ्च कीटोऽपि सुमन सङ्गादारोहति सतां शिर ' इति।

(२४५) सपक्ष —पक्षाभ्यां सह वर्तमान पक्षे सहाययुक्त । स हि
पक्षहीन —हि यत स सिद्ध पक्षहीन पक्षयुक्त असहाय इत्यर्थ ।

(२४६) धीर—सुविचारपुर सर पक्षे मन्द मन्दम्। पदम्—सुप्तिङन्तादि
पदम् , पक्षे चरणम्। शब्द समुदीयते—शब्दोऽयं शुद्ध अशुद्धो वा इति
विचारयति, पक्षे नुपुर क शब्दो जायते इति शृणोति। नानार्थोद्धरणम्—श्लिष्ट
पदप्रयोगेण विविधार्थसग्रहम् , पक्षे स्वर्णरौप्याद्यपहरणम्। अलङ्कारम्—उपमादि
विविधालङ्कारम् , पक्षे कङ्कणादिभूषणम्। सुवर्णनिचयम्।—सुश्राव्यवर्णसमूहम् ,
पक्षे स्वर्णसमूहम्। रसान्तर्गतम्—शृङ्गारादिरसमिश्र वाक्यम् , , पक्षे रसायां
पृथिव्या अन्तर्गतम्—भूम्यन्तरस्य लुक्कायित धनम्। दोषान्वेषणतत्पर —दोषाणां

दुःश्रवत्वादीना काव्यस्येति शेष अन्वेषणे तत्पर मनोयोगी, पक्षे दोषा रात्रि तस्या अन्वेषणे तत्पर ।

(३४८) कविताकान्ता स्वयंवरेति शेष । व्याकरणञ्च पितर नैव एति कविताया व्याकरणज्ञानजन्यत्वात् तस्य तस्या पितृत्वम्। छान्दसात्—वेदाध्यायिनो जनात्।

(३४९) वज्रो मणि—हीरकम्। करटारवा—करटानां काकाना आरवा शब्दा ।

(३५०) चन्दनशब्दस्य क्लीवत्वे चन्दनकाष्ठार्थप्रतीति ।

(३५१) कुम्भसम्भव—कुम्भजातोऽगस्त्यमुनि ।

(३५२) पात्रम्—दीपाधारम् पक्षे परिवारवर्गम्। मल—पाप, पक्षे सुगमम्। स्नेह—तैल, पक्षे सुगमम्। गुणान्—दीपवर्तिका पक्ष विनयादीन्। क्षिणोति—नाशयति। द्रव्यावसानसमये—तैलाद्यभावे पक्षे खाद्यपरिधेयाद्यभावे। कुलसद्मनि—वंशरूपगृहे। कोऽपि—अनिर्वचनीय साधारणदीपादितर इत्यर्थं ।

(३५३) भास्वति—सूर्ये। शनैश्चर—सूर्यसुत । विधौ—अस्त गते इति शेष । बुध—सौम्य ।

(३५४) अवंशभवा—वेणुभिन्नवस्तुनिर्मिता पक्षे नीचकुलोत्पन्ना । गुणेन मौर्व्या नैपुण्यादिगुणेन च प्रयुक्ता प्रेरिता सन्त परमर्मभेदिन परेषां मर्मस्थान विदारका भवन्ति। ये च विशुद्धवंशजा उत्कृष्टवेणुनिर्मिता उत्कृष्टकुलोत्पन्नाश्च ते तथाविधा गुणप्रयुक्ता चापा इव नम्रता व्रजन्ति। वंशस्य गुणदोषा हि पुंसां सदसत्प्रकृति जनयन्तीति भाव ।

(३५५) चलुकीकरोति—गण्डूषीकरोति नाशयतीत्यर्थं । किञ्च—अन्यच्च।

(३५७) पूर्वार्द्धेन बकस्य गुणाधिक्य दर्शयति। उभौ पक्षौ शुक्लौ शुभ्रौ बकस्येति यावत्, पर चन्द्रस्य एकपक्ष एव शुक्ल । वियति—आकाशे। अव्याहतगति—बक इति शेष, चन्द्रस्तु केवलाकाशे। बक सदा मीन भुङ्क्ते खादति, चन्द्रस्तु मासमेक मीनराशिं भजते। बक सकलस्थाणुशिरसि समस्त शाखापत्रशून्यवृक्षोपरि वसति, चन्द्रस्तु एकस्य स्थाणो शिवस्य शिरसि वसति,

कश्चित् एभ्य पृथक् कोऽपि अधिक गुण अन्तेऽस्तीति शेष । स च इत्याह गुणा इति । स्थाने योग्याधिकरणे मान्या पूज्या , स्थानरहिता अयोग्यस्थाने निहितायत नहि न तादृक् मान्या भवन्तीति फलितार्थं । स्थानोत्कर्षेणैव गुणानामुत्कर्षं इति भाव ।

(२५८) वद स्थलीति—हरेर्वच स्थली विधेहदन हरस्य वामशरीरभाग ते । पुरुषास्तय —हरिविधिहरा ।

(२५९) समुद्र प्रति रावणस्य तिरस्कारोक्तिरियम् । रावणेन दशभिमुखै अम्बुधिशब्दादय उच्चारिता ।

(२६१) वागुरिक—व्याध । सीदन्ति—द खमनुभवन्ति । शष्पकवलयहणा-नभिज्ञा नवकोमलतृणान्यपि भक्षयितुमक्षमा ।

(२६७) कौरवपाण्डववार्ष्णेयान् सम्बोध्य द शासन प्रति भीमस्य क्रोधोक्तिरियम् । व —युष्माकम् । मम्—द शासनम् ।

(२६८) अन्यश्रुते—श्रुत विद्या ।

(२७०) वोढा—वहनशील । धनपतिसखम्—कुवेरमित्र शिवमित्यर्थं

(२७२) (क) वाजिमखस्य—अश्वमेधयज्ञस्य ।

(ख) षल् ऐश्वर्यप्रसवयोरित्यदादिगणीयस्य सु धातो रूपम् । प्रसौति विजय धर्म्म इति हलायुध ।

(२७४) ससात —तस्या सुके तात पिता । दौत्य—दूतकर्म्म विवाहकार्य्ये घटकत्वमिति यावत् । भक्ते—ह भक्ते । परिहसनविधौ—कौतुकच्छलेन ।

(२७५) स्वःसिन्धुतीरे—स्वर्गगङ्गातटे मन्दाकिनीतीरे इत्यर्थं । अघविघात वीरे—अघानां पापानां विघाते विनाशविषये वीरे वीरसदृशे । चीर—अजिने । अधीरे—नश्वरे ।

(२७६) हर—शिव । हर—नाशय । ह—सम्बोधने । 'ह स्यात् सम्बोधने पादपूरणे च विनिग्रहे इत्यादि मेदिनी । गङ्गेत्यादि—हे गङ्गाधर से पदाले मे चेतस धरभाव धारकत्वं धर पवलम्बस्व स्वकीये पादपद्मे मदीय चित्त स्थापय इत्यर्थं । भवेत्यादि—हे भव भव एव सिन्धु तस्मिन् भवसिन्धौ संसारसागरे मे कर्णधार

नाविकः भव, मां संसारसागरस्य पारं नय इत्यर्थः । अपिच भव सिन्धुरिव तस्मिन् भवसिन्धौ सिन्धुवत् महाविपत्सङ्कुले संसारे मे कर्णधारः भव अतिमूढलात् असत्पथ प्रवृत्तस्य मम कर्णे धृत्वा सत्पथप्रवर्त्तको भव इत्यर्थः । किञ्च भवसिन्धौ सर्वमङ्गला त्वदे भव काशीचैत्ये मे कर्णधारो भव, मरणसमये तारकमन्त्र दातु मम कर्णे धारय, "यत्र काश्यां श्वलेऽपि जन्तुर्नाशुचिता व्रजेत्। अतस्तत्कर्णसंस्पर्शं करोम्यहमपि स्वयम्" इति प्रतिज्ञातवान् ~ यथा मे काशीमृत्युर्भवेत् तथा करुणा कुरु इति भावः । "भवः क्षेमेऽथसंसारे सत्तायां प्राप्तिजन्मनोः" इति मेदिनी। मृत्युमित्यादि—हे मृत्युञ्जय त्वजय सर्व्वोत्कर्षेण वर्त्तस्व देवतान्तराणि परित्यज्य केवलं त्वामेवाहं प्रणमामीत्यर्थः । जय शम्भो इति वाक् सदा मदास्ये मदीयवदने स्यात् अस्तु।

(१७७) (क) समाप्य—उपभुज्य। विषयान्—भोग्यवस्तूनि। कल्लोलः—तरङ्गः।

(१७८) (क) ( रन्ध्रम्=९, शुभांशु =१ रूपम्=१ नक्षत्रनायकः =१ ) अतएव ९१११ अङ्कस्य वामगत्या ११९९ शकाब्दाः (६०४ वङ्गाब्दाः, ११९७ खृष्टाब्दाः वा ) उद्भवन्ति।

(ख) ९१११ अङ्कस्य वामगत्या ११९९ शकाब्दाः उद्भवन्ति।

(१८०) (क) बाण =५, व्याहृति =७, राग =६, इन्दु =१। अतएव अङ्कस्य वामगत्या १६७५ शकाब्दाः (११६० वङ्गाब्दाः, १७५३ खृष्टाब्दाः वा) उद्भवन्ति।

(ख) धरेति—भूदेवराजस्य वारेन्द्रवंशीयस्य गौडप्रदेशाधिपस्य रामकान्तनृपस्य। भाविनी—सहधर्म्मिणी। श्रीभवानी—श्रीमती राज्ञी भवानी।

(१८१) खम्=०, शून्यम्=०, शिवम्=१७। अतएव अङ्कस्य वामगत्या १७०० शकाब्दाः ( ११८५ वङ्गाब्दाः, १७७८ खृष्टाब्दाः वा ) उद्भवन्ति।

(१८२) गङ्गावासे—नवद्वीपादूरपूर्व्वदेशवर्त्तिनि शान्तनगङ्गातीरस्थायिनि ग्राम विशेषे। विधिश्रुति =चतुर्मुखकर्ण =८, सुकृत =पुण्य =९, क्षौणिपाल —राजा = १६। अतएव अङ्कस्य वामगत्या १६९८ शकाब्दाः (११८३ वङ्गाब्दाः १७७६ खृष्टाब्दाः वा ) उद्भवन्ति।

(१८३) पाणिग्रहः—विवाहः, पक्षे पाणौ हस्ते धारणम्। सुवर्णगौरवा—उच्चकुलजाता, पक्षे उत्तमवर्णरूपा।

(१८४) येन विष्णुना रामेणेत्यर्थ , अयो लौह लक्षणया तन्निर्मितमस्त्रमित्यर्थ ,
घृत्वा रावण दाय खण्डित हत इत्यर्थं । दो धातो कर्म्मणि क्त्।
स रामरूपी विष्णुर्वा युष्मान अव्यात् पायात्। रावण विशिनष्टि—करणोरण,
करण कार्य्ये युद्धकर्म्मणीति यावत् उरण मेष इव तद्वत् विपक्षमपराभूय कथमपि
रणान्न निवर्त्तते इति भाव । यद्वा करणे इन्द्रिये तदुपभोगे उरण इव पशुस्वभाव
इति यावत परदारापहारकत्वादिति भाव । रणरण—रणे युद्धे रणति स्पर्द्धया
सिंहनाद करोति यस्तादृश । राव—राति ददातीति कर्त्तरि अन, दातेत्यथ ।
अरण—न विद्यते रणो युद्ध यस्य तादृश रामेण सह युद्धात् प्राक दिग्विजयि-
त्वान्निवृत्तयुद्ध इत्यर्थं । अत्—अत्ति भक्षयति मानुषानिति शेष नरमांसभक्षक ।
अभी—भाद्विष्णोर्भीर्भय यस्य स । अधुना राम विशिनष्टि। अव यस्येति
पदमध्याहार्य्यम। यस्य रामस्य रामा पत्नी सीतेति यावत् रम अभि आर आत्मग्रहवे
वह्नि प्रविवश। सीता कीदृशीत्याह या सीता मार कन्दर्प प्रत्यपि अरमा अनभिलाषा
पतिव्रतेत्यर्थं । या च रमासारमा—रमाया लक्ष्म्या सार तेज माति परिमित
करोति, स्वरूपतो लक्ष्मीरित्यर्थं । राम स्वय कीदृश ? श्रीमानदयोदय—श्री
सम्पत् मानयित्तसमुन्नति दया परदुःखापहरणेच्छा आसाम् उदयो यस्मात् स
समाराध्य सर्वं एश्वर्य सम्मान तदनुग्रहञ्च लभन्त इत्यर्थं । पुन कीदृग ?
दयदय—दये दाने दया यस्य स यो हि पालभ्य सदय ददाति न लसन्तोष
मित्यर्थं । अपिच वेदय—वेदयतीति ज्ञजन्त विद धातो रूदन्तरूप मानवदह
माश्रित्य स्वकर्म्मभि परेभ्यो ज्ञानप्रद इत्यर्थं । किञ्च जिष्णु—जयशील । पुन
कीदृश अभीरभीरभीराभी—न भीरभी अभयमित्यर्थं अभिय राति ददातीति
अभीरा वायुर्जगत्प्राणत्वात अभीराय वायवे भिय राति ददातीति अभीरभीर सर्प
पवनाशनत्वात् तस्य भरो धारण तेन भिय राति य भयप्रद अभीरभीरभरभीरो
गरुड तस्मात् अभी अभय यस्य तादृश विष्णुरिति फलितार्थं गरुड़वाहनत्वादस्येति।
पुन कथम्भूत ? अभीभो—न विद्यते भीर्भय देवेभ्य इति शेष यस्य स इन्द्रजित् त
स्यति छिनत्तीति अभीभो लक्ष्मण तम् अवति रक्षति अभीभो ।

(१८५) इदम्—अभिव्यक्तम अहम्। कार्त्तिकदर्शनेष—१२ अहेन।

षट्केन—११ षड्केन। ब्रह्मास्त्रप्रहत—४ षड्केन गुणितम्। जलाधिपतिना वरुणेन—षड्केन २४ षड्केन इत्यर्थ भक्त सत् यत् अवशिष्टम्। वेदाङ्गैः हत—६ षड्केन गुणितम्। एवप्रकारेण १२० संख्या उद्भवति।

(३८६) इष्टम्—अभिलषितम् अङ्कम्। खाग्नेति—०००युक्तम्। खखयमेति—२०० राशिना व्यवकलितम्। खखेशेति—११०० अङ्केन युक्तम्। खाकाशेति—५०० राशिना भक्तम्। यच्छुषितम्—यत् शषित आगावशिष्ट, तत् द्विगुणित, पुनश्च द्वगहत २ अङ्केन गुणित, ४ अङ्केन गुणितमित्यर्थ। खाकाशाग्नीति—३०० अङ्केन युतम्। शशियुतम्—(पुनश्च) १ अङ्केन संयुक्तम्। एवप्रकारेण १८०१ खृष्टीयाब्दा उद्भवन्ति।

(३८७) इष्टम्—अभिलषितम् अङ्कम्। बाणगुणम्—५ द्वारा गुणितम्। सुखेन सहितम्—४ युक्तम्। खाङ्काहतम्—९० गुणितम्। तत् नष्टम्—तत् शरभूधरै ७५ द्वारा नष्ट भक्त तत्र यद् अवशिष्ट तत् पक्षेण २ द्वारा गुणितञ्च। नवत्सरम्—व्याप्य इत्यर्थ। अर्थात् १२० वत्सर व्याप्य शिष्टा जना जीवन्तु।

अथवा इष्टम्—अभिलषितम्। नागहत—८ द्वारा गुणितम्। युत शशभृता—एकेन सह युक्तम्। निध शरषे शिवै—५५ द्वारा गुणितम्। व्योमयुगे तष्ट—४० द्वारा भक्तस्य यत् अवशिष्ट तत्। गजेन—८ द्वारा। अर्थात् १२० वत्सर व्याप्य शिष्टा जना जीवन्तु।

(३८८) स कश्चिद् गुणग्राही जनो रत्र कश्चिद् गुणवति जने रम नन्द "जातौ जातौ यदुत्कृष्ट तद् रत्नमिति कथ्यते। स कीदृश ? न मोदन्ते प्रमोद न यान्तीत्यमुन्दि अक्षाणीन्द्रियाणि यस्य सोऽमुदक्षो जितेन्द्रिय। तथा बलदमनयद यक्षुपगमनीतिदाता। तथा सेवायां परप्रणती मर्ग उत्साहमभ्यात् उदस्ती निरत स्वाधीन इत्यर्थ। रसे कीदृशे ? वेदान्तपमो वेदाधप्रस्तव अधीतवदे इत्यर्थ। तथा शक्ते प्रियवदे। तथा रचित कृतौ निशाया रजौ रागद्वेषात्मिकाया बाधाया उच्छेदे उन्मूलने यत्नो येन तस्मिन् रचितनिशबाधच्छेदयत्ने। तथा न रमन्ते सुजनेषु धर्मे वा ये न अरमा दुर्जनास्तानीरयति दूरीकरोति यस्तस्मिन् अरमेरे दुर्जनदूरीकारके इत्यर्थ। तथा देवेषु आसक्ते देवासक्तस्मिन् देवासक्ते देवपूजानिरते इत्यर्थ। तथा

तोदस्य व्यथाया दुर्गा दुर्गमा परानभिभूतास्तानप्यस्यन्ति क्षिपन्तीति तोदस्यगोत्रास्तेषां वासे निकेतने, शूराणामपि शूरा समाश्रिता' तस्मिन् इत्यर्थः। तथा दयन दान रक्षा वा तेन यो मदलवो गर्वकणिका तेन च खेद परिवेदना तेन मुक्ते रहिते प्रिय कृत्वापि अगर्वित इत्यर्थः। *तथा वादैः सह वर्तते सवादस्तस्मिन् प्रमाणशास्त्रे इत्यर्थः। तथा अयन आगच्छन् अच्छो निर्मलता यस्मात् तस्मिन् अयदक्षे शुद्धिमति इत्यर्थः। तथा गुरुभिः गुरुसेवाभिर्जनितो यस्थिर क्रम श्रमस्तेनैव सह श्रान्त अथवा सन्ने आसक्ते। तथा अपदान पदभ्रष्टान अवतीति अपदाव यद्वा अपगतो दाव उपतापो यस्मात् तस्मिन्निति।

(२८९) (क) क कर्णारिपिता ?—कर्णश्चवीरर्जुनस्य पिता 'वासव'। किमिच्छति जन ?— इरत्वम्। कि खीकृत विष्णुना ?— कृस्वत्वम् (वामनत्वम्)। को जानाति परेङ्गितम् ?— 'मतिमान्। विषमगु ( पञ्चबाण कन्दर्प ) कुत्रास्ति वा कामिनाम् ?— मनसि सीता कस्य वधू ?— 'रामस्य'। इति प्रिय किमु हरे ?— कौस्तुभ' वक्ष्य कप को मुखाम् ?— अभ्यड । इति अष्टमत्युत्तरपदानां मध्यमाक्षरसयोगेन सरस्वति नमस्तुभ्यम् इति महामन्त्र प्राप्त। सौहित्येन—पर्याप्तभोजनेन।

(२९०) (क) सन्धिमहोत्सवे—सन्धिपूजाकाल। दस्रौ—अश्विनीकुमारौ। (ख) शीतगु—चन्द्र। आतपवारणा—छत्रधारणम् (ग) भाद्रमासस्य शुक्लचतुर्थ्यां कृष्णचतुर्थ्यां च तिथौ नष्टचन्द्रत्वात् चन्द्रदर्शन निषेध।

पञ्चाननगते भानौ पक्षयोरुभयोरपि।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्य कदाचन॥

(घ) ब्राह्मणस्य—हे ब्राह्मण त्व स्व खण्डय ( सो+लोट्+हि )।

(२९२) खलकण्ठमापीड्य—रज्ज्वा इति शेष। दृष्ट निपत्य—एतादृश कूपस्य कूपपतनस्वभाव। उपनीय—गृहीत्वा। चवति—रचति। सतां—साधूनाम्।

(२९७) पवि—वज्रम्। यवसवत्—तृणवत्। दव—वनाग्निम्। शिला मशकवत्—मशकखण्डवत्।

(२९८) तम सोम—अन्धकारसमूह। शलभ—पतङ्ग।

(३९९) प्रकृतिलघी—प्रकृत्या स्वभावेन लघी तक्रे। गुची—पवित्रे। भासि-तरङ्ग—भासमान वडिशसूत्रबद्ध मत्स्यकाण्डखण्ड ( फात्नेति प्रसिद्ध )

(४०१) पण्डिते गोरस वाक्यरस । स्त्रीजने गोरसः चक्षूरस दृष्टिरसो वा, दर्शनमाधुर्य्यमिति यावत् । भोजने गोरस धेनुरस दुग्धमित्यर्थ ।

"दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु ।

भूमौ पशौ च गोशब्दो विद्वद्भिर्दशसु स्मृत ॥ —हलायुध ।

(४०४) पनस पुष्पमप्रदर्श्यैव फल प्रसूते तथोत्तमजनोऽपि वाचमकृत्वैव कार्य्यं करोति । अतस्तत्साद्दश्यमुत्तमस्य । आम्र पुष्प फलञ्च प्रकटीकरोति, तथा मध्यमोऽपि जन प्रथम् वाक पर कार्य्यं इत्येव करोति । अतस्तत्साद्दश्यम् । कुन्दस्तु केवल पुष्पमेव ददाति, तथा अधमोऽपि केवल वाक्परायण न तु कर्म्मतत्पर । अत कुन्दसाद्दश्यमधमस्य । पुष्पफलमित्यत्र जातिरप्राणिनाम ( पा—२ । ४ । ६ ) इति द्वन्द्वैकवद्भाव । वाक् कर्म्मेत्यत्र सर्व्वो हि द्वन्द्वो विभाषया एकवद्भवतीति न्यायाद् द्वन्द्वैकवद्भाव । वागपि इत्यत्र अपि शब्द अवधारणार्थं वागेव वाङ्मात्रमिति यावत् न तु कर्म्मेत्यभिप्राय ।

(४१०) हेमकार—स्वर्णकार । सुवर्णगुणातिरक्त —सुन्दरवर्णगुणातिशय ।

इति तृतीय-प्रवाह समाप्त ।

---

# शेषोक्तिः ।

( १ )

जामाता यत्र विष्णु स्वयमुपयमने कन्यका लोकमाता
विश्वामित्रश्च दूतो निखिलगुणनिधिर्योगकर्त्ता वशिष्ठ ।
राजर्षिं सम्प्रदाता नरवरजनकस्ते यया सुप्रसन्ना
दैव तन्नौमि यस्याकरुणविधिवशात् सौख्यलेशो न तव ॥

( २ ३ )

जनक लक्षचन्द्रो मे जननी विन्ध्यवासिनी ।
पितामहो रामचन्द्र सार्थक प्रपितामह ॥
श्रीभाराम इति ख्यातो मद्वृद्धप्रपितामह ।
देवद्विजमहाभक्ता इमे मे पूर्व्वपुरुषा ॥

( ४ )

श्रीपूर्णचन्द्रकविभूषणकाव्यरवौ
सौरे गुणी व्यतनुतोऽम्बुसागराख्या ।
यस्य गुरोरतुलसुहृत्सागराख्या
शैवे दिने ग्रहगणेभशशाङ्कमाके ॥

( ५ )

संसारेऽखिलसारे कलिकलुषहरे भास्वरे सौधनीरे
सर्व्वस्थानैकसारे सकलसुखकरे जाह्नवीपुण्यतीरे ।
यस्या भूतालिपाली निवसति नितरां लिङ्गमाली कपाली
हुगलीशैलान्तरे सा मम भुजगभू भद्रकाली सुखालि ॥

सम्पूर्णोऽयं ग्रन्थ ।

## কবিভূষণ শ্রীপূর্ণচন্দ্র দে কাব্যরত্ন উদ্ভটসাগর বি-এ

প্রণীত, সংগৃহীত অনূদিত বা সম্পাদিত পুস্তকাবলী :—

১। সমগ্র বিশুদ্ধ ব্যাকরণ কৌমুদী (চারি ভাগ একত্র) (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত)। (চতুর্থ সংস্করণ)। 'আত্মনেপদ, পরস্মৈপদ" ও "লকারার্থ নির্ণয়ে পাণিনীয় বা বার্ত্তিক সূত্র এবং বাঙ্গালায় তাহার বিশদ ব্যাখ্যা দেওয়া হইয়াছে, অন্যান্য বিষয়ে অপাণিনীয় সূত্রগুলি কোন্ পাণিনীয় সূত্রের অন্তর্গত তাহাও ফুট নোটে লিখিত হইয়াছে। বিদ্যাসাগর মহাশয়ের সংস্করণে যে যে ভ্রম বা প্রমাদ ছিল তাহাও সংশোধিত হইয়া ফুট নোটে সন্নিবেশিত হইয়াছে। সূত্রার্গত উদাহরণ গুলির অর্থ এবং প্রত্যেক প্রকরণের নিম্নভাগে সহস্রাধিক উৎকৃষ্ট প্রশ্ন ইংরাজী ভাষায় প্রদত্ত হইয়াছে পরিশিষ্টে লিঙ্গ নির্ণয়ের সুন্দর ব্যবস্থা করা হইয়াছে। এরূপ উৎকৃষ্ট ও সর্ব্বাঙ্গ-সুন্দর সংস্করণ এ পর্য্যন্ত বাহির হয় নাই গ্রন্থখানি ৬০০ পৃষ্ঠে সম্পূর্ণ হইয়াছে। মূল্য কাপড়ে বাঁধা ১৸০ (দেড় টাকা)

২। বিশুদ্ধ ব্যাকরণ কৌমুদী (প্রথম ভাগ) (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত)। অনেক অধিক শব্দের রূপ ও প্রত্যেক প্রকরণের শেষে বহুসংখ্যক প্রশ্ন সমন্বিত। পারিভাষিক শব্দের ইংরাজী প্রতিবাক্ও দেওয়া হইয়াছে। মূল্য ।০ (আট আনা)।

৩। বিশুদ্ধ ব্যাকরণ কৌমুদী (দ্বিতীয় ও তৃতীয় ভাগ একত্র) (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত)। ১৬ খানি প্রাচীন সংস্কৃত ব্যাকরণ ও টীকা অবলম্বন করিয়া ইহা সম্পাদিত হইয়াছে। মূল্য ১ (এক টাকা)।

৪। বিশুদ্ধ ব্যাকরণ কৌমুদী (চতুর্থ ভাগ) (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত)। ইহা অতি সাবধানে সম্পাদিত। বিদ্যাসাগর মহাশয়ের সমস্ত মূল আছে। তবে যে যে ভ্রম ও প্রমাদ ছিল তাহা শোধন করিয়া দেওয়া গিয়াছে। ১৬ খানি প্রাচীন সংস্কৃত ব্যাকরণ ও টীকা অবলম্বন করিয়া লিখিত। বিভিন্ন ব্যাকরণের মতামত যথেষ্ট আছে। কয়েকটী কথা বক্তব্য—(১) সংস্কৃত সূত্র গুলির বিশদ ব্যাখ্যা এবং তাহাদের প্রমাণ স্বরূপ নানা উদাহরণ নানা মহাকাব্য হইতে গৃহীত। (২) স্ত্রী প্রত্যয়ের ৬৫ হইতে ৭০ সূত্র গুলি নূতন সন্নিবেশিত। (৩) বিদ্যাসাগর মহাশয়ের স্বরচিত সূত্র কি বা পাণিনি ও কাত্যায়ন হইতে গৃহীত সূত্র গুলি সংখ্যা সহ যথাযথ উল্লিখিত। (৪) প্রত্যেক প্রকরণের নিম্নভাগে প্রচুর পরিমাণ প্রশ্ন নিহিত। (৫) ফুট নোটে অনেক অবশ্য জ্ঞাতব্য কথা উল্লিখিত। অন্যান্য সংস্করণ অপেক্ষা ইহা তিন গুণ বড়। গ্রন্থখানি ৪৪০

পৃষ্ঠে সম্পূর্ণ। এরূপ সর্ব্বাঙ্গ সুন্দর স স্করণ এ পর্য্যন্ত বাহির হয় নাই। হাই স্কুল ও কলেজের ছাত্রগণের সবিশেষ উপকারী। মূল্য ১৲ (এক টাকা)।

৫ সচিত্রম্ ঋজুপাঠম্ (প্রথমো ভাগ) (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত) বিদ্যাসাগর মহাশয়ের সমস্ত টিপ্পনী আছে। এতদ্ভিন্ন গ্রন্থকার ফুটনোটে প্রচুর পরিমাণে শব্দের অর্থ বু্য পত্তি সমাস বাচ্যান্তর ও ই রাজী অনুবাদ দিয়াছেন। ১২ খানি হাফ টোন ছবি আছে। সুন্দর ছাপা ও বাঁধান মূল্য ৷৵ (নয় আনা)

৬। সরল স স্কৃত পাঠ (প্রথমে ভাগ) প্রথম স স্কৃত পাঠার্থীদিগের জন্য। একটীও স যুক্ত বর্ণ নাই। মূল্য (চারি আনা)

৭। সরল-স স্কৃত পাঠ প্রথমো ভাগ) ইহার বিশদ্ধ ব্যাখ্যা পুস্তক মূল্য ।৵ (পাঁচ আনা)

৮। সরল স স্কৃত পাঠ (দ্বিতীয়ো ভাগ) ইহাতে স যুক্ত বর্ণ আছে ব্যাকরণ শিক্ষার বিশেষ উপযোগী মূল্য ৷ (আট আনা)

৯। বিশুদ্ধ ও সচিত্র পদ্যপাঠ (১ম ভাগ) ৺যদুগোপাল চট্টোপাধ্যায় প্রণীত। প্রচুর টীকা অর্থ বু্য পত্তি ও প্রশ্ন সহিত মূল্য (চারি আনা)।

১০। বিশুদ্ধ ও সচিত্র পদ্যপাঠ (২য় ভাগ)। ৺যদুগোপাল চট্টোপাধ্যায় প্রণীত। প্রচুর টীকা অর্থ ব্যুৎপত্তি ও প্রশ্ন সহিত মূল্য ৵ (ছয় আনা)

১১ বিশুদ্ধ ও সচিত্র পদ্যপাঠ ( য় ভাগ) ৺যদুগোপাল চট্টোপাধ্যায় প্রণীত। ইহাতে সম্পূর্ণ টীকা অর্থ ব্যুৎপত্তি ও প্রশ্নাদি আছে মূল্য ৷ (আট আনা)

১২। বিশুদ্ধ ও সচিত্র চারুপাঠ (১ম ভাগ) ৺অক্ষয়কুমার দত্ত প্রণীত। প্রচুর টীকা অর্থ ব্যুৎপত্তি ও প্রশ্ন সহিত মূল্য ৷ (আট আনা)

১৩। সচিত্র সানুবাদ ও বিশুদ্ধ চাণক শ্লোক এরূপ সর্ব্বাঙ্গ সুন্দর চাণক্য শ্লোক আর নাই। তিনখানি সুন্দর ছবি আছে প্রতে ক খানি তিন রঙের তৃতীয় স স্করণ মূল্য। (চারি আনা)

১৪। বিশুদ্ধ ধাতু রূপ সাগর ঐপু চন্দ্র দে ইন্ডট সাগর বি এ প্রণীত ইহাতে প্রায় ৫ স স্কৃত ধাতুর লট, লোট ইত্যাদি ২১ প্রকার রূপ আছে। মূল্য ১৲ (এক টাকা)।

১৫। "উদ্ভট-সাগরঃ" (প্রথম দ্বিতীয় তৃতীয় প্রবাহ সমন্বিতঃ)। এই সংস্কৃত গ্রন্থখানি গত ১৯১৭ খৃষ্টাব্দ হইতে সংস্কৃত প্রথম, দ্বিতীয় ও উপাধি ত্রিবিধ পরীক্ষায় কাব্য ও ব্যাকরণে পাঠ্য হইয়াছে প্রত্যেক বৎসরেই ইহা হইতে প্রশ্ন পড়িয়াছে, এবং আগামী পরীক্ষায়ও ইহা হইতে প্রশ্ন পড়িবে। প্রথম প্রবাহ প্রথম পরীক্ষার জন্য দ্বিতীয় প্রবাহ দ্বিতীয় পরীক্ষার জন্য, এবং তৃতীয়-প্রবাহ উপাধি-পরীক্ষার জন্য "কলিকাতা সংস্কৃত এসোসিয়েসন্"-কর্ত্তৃক নির্ব্বাচিত। তিনটী প্রবাহই একত্র বদ্ধ। তৃতীয়-সংস্করণ। মূল্য কাগজে বাঁধা ২৲ দুই টাকা, কাপড়ে সোণার জলে বাঁধা ২॥০ (দুই টাকা আট আনা)।

১৬। "উদ্ভট-সমুদ্র" (দ্বিতীয় সংস্করণ) (বিক্রমাদিত্যের নবরত্নের এবং অন্যান্য কবি-গণের উৎকৃষ্ট উদ্ভট শ্লোক)। (প্রাঞ্জল ও সুললিত বাঙ্গালা পদ্যানুবাদ সহিত)। মূল্য কাপড়ে বাঁধা ২৲ (দুই টাকা)।

১৭। "রস সাগর স্বর্গত কবি কৃষ্ণকান্ত ভাদুড়ী"। ইহাঁর জীবন চরিত এবং ৩০৪ (তিন শত চারি) অদ্ভুত বাঙ্গালা সমস্যা পূরণ কবিতা আছে। এরূপ অপূর্ব্ব গ্রন্থ এ পর্য্যন্ত বাহির হয় নাই। মূল্য ২৲ (দুই টাকা)।

১৮। "স্তব সমুদ্রঃ" (প্রথম-প্রবাহঃ)। ইহাতে নানা দেব দেবীর সংস্কৃত স্তব আছে। প্রত্যেক স্তবের প্রত্যেক শ্লোকের প্রাঞ্জল ও সুললিত বাঙ্গালা পদ্যানুবাদ প্রদত্ত। মূল্য কাপড়ে বাঁধা ২৲ (দুই টাকা)।

১৯। "পাণ্ডব গীতা" (প্রাঞ্জল ও সুললিত বাঙ্গালা পদ্যানুবাদ সহিত)। মূল্য কাগজে বাঁধা ॥০ (আট আনা)।

২০। "প্রশ্নোত্তর মণিরত্নমালা" (শঙ্করাচার্য্য), "প্রশ্নোত্তর মালা" (জৈন যতি বিমল), "প্রশ্নোত্তর রত্নমালিকা" (কৃষ্ণানন্দ সরস্বতী)। (প্রাঞ্জল ও সুললিত বাঙ্গালা পদ্যানুবাদ সহিত)। মূল্য।৶০ (ছয় আনা)।

গুরুদাস চট্টোপাধ্যায় এণ্ড সন্স্।
২০৩।১।১ নং কর্ণওয়ালিস ষ্ট্রীট, কলিকাতা।

২১। বিশুদ্ধ "উপক্রমণিকা ব্যাকরণ" (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত) (দ্বিতীয় সংস্করণ)। অতি বিশুদ্ধ ভাবে ও সুন্দর রূপে মুদ্রিত। প্রত্যেক প্রকরণের শেষে অনেকগুলি করিয়া প্রশ্ন দেওয়া আছে। বিদ্যাসাগর মহাশয়ের মূল গ্রন্থে যতগুলি ধাতুর রূপ দেওয়া ছিল এই পুস্তকে প্রায় তাহার দ্বিগুণ ধাতুর রূপ দেওয়া হইয়াছে। পারিভাষিক শব্দ গুলির ইংরাজী প্রতিবাক্য এবং প্রত্যেক ধাতু রূপের নিম্ন ভাগে অনুবাদ ও সংশোধন বিষয়ক প্রশ্নও নিহিত আছে। গ্রন্থখানির আকার বৃহৎ। মূল্য ৸৹ (বার আনা।)

২২। সীতার বনবাস (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত)। ইহা অতি বিশুদ্ধ ও সর্ব্বাঙ্গ সুন্দর সংস্করণ। প্রত্যেক পৃষ্ঠের নিম্নভাগে দুরূহ শব্দের অর্থ ব্যাকরণ গত বিষয়, এবং গ্রন্থের শেষে "ভৌগোলিক বিবরণ ও প্রায় সর্ব্বশুদ্ধ ৫০০ (পাঁচ শত সুন্দর প্রশ্ন নিহিত আছে ইহার মত উৎকৃষ্ট সংস্করণ অদ্যাবধি বাহির হয় নাই। মূল্য ৸৹ (বার আনা)।

২৩। শকুন্তলা" (ঈশ্বরচন্দ্র বিদ্যাসাগর প্রণীত। ইহা সীতার বনবাসের" প্রণালী অবলম্বন করিয়া লিখিত। মূল্য ৷৷৹ (আট আনা)।

মেসার্স্ ম্যাক্‌মিল্যান্ এণ্ড কোম্পানী লিমিটেড্।
২৯৪ নং বৌবাজার ষ্ট্রীট কলিকাতা।

---

২৪। "প্রবন্ধপাঠ" (৬ষ্ঠ সংস্করণ)। ইহা কলিকাতার এবং বর্দ্ধমান, ঢাকা ও চট্টগ্রাম ডিভিসনে ম্যাট্রিকিউলেসন স্কুল সমূহে সমাদৃত পাঠ্য পুস্তক। ইহার ভাষা অতি বিশুদ্ধ ও প্রাঞ্জল। মূল্য ৷৷৹ (আট আনা)।

২৫। মোহমুদ্গর ও "মোহ মুদ্গর" (শঙ্করাচার্য্য বিরচিত ও একত্র বদ্ধ) (দ্বিতীয় সংস্করণ)। প্রত্যেক সংস্কৃত মূল শ্লোক সুললিত ও প্রাঞ্জল বাঙ্গালা পদ্যানুবাদ সহিত। ইহাতে শঙ্করাচার্য্যের জীবন চরিত প্রদত্ত হইয়াছে। মূল্য কাগজে বাঁধা ।৹ (চারি আনা)।

শ্রীযোগেন্দ্রনাথ মুখোপাধ্যায়।
সান্যালর সংস্কৃত প্রেস ডিপজিটরী,
৩০ নং কর্ণওয়ালিস্ ষ্ট্রীট, কলিকাতা।